योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 302 संस्कृत दैनिक/ प्रात; संस्करण प्रयागराज 27 अगस्त 2021 शुक्रवार पृष्ठ-4 मूल्य- 2 रुपये

## सुभाषितम्

**वंशीविभूषित करान्नव नीरदाभात। पीताम्बराद रुणबिम्ब फलाधरोष्ठात् । पूर्णेन्दु सुन्दर मुखादरविन्दनेत्रात्। कृष्णात्परं किमपि तत्त्वमहं न जाने॥**

जिनके करकमल वंशी से विभूषित हैं, जिनकी नवीन मेघ की-सी आभा है, जिनके पीत वस्त्र है, अरुण बिम्बफल के समान अधरोष्ठ हैं, पूर्ण चन्द्र के सदृश सुन्दर मुख और कमल के से नयन हैं, ऐसे भगवान श्रीकृष्ण को छोड़कर अन्य किसी भी तत्त्व को मैं नहीं जानता।

## संक्षेपेण वार्ताः

**प्रयागराजः! 'इलाहाबाद-संग्राहलय'** इति स्थाने श्वः 27अगस्त दिनांके 'श्रीकृष्ण-जन्माष्टमी' इति पावनपर्वणि 'श्रीकृष्णलीला' इति सम्बन्धितपाण्डुलिपीनां चित्रेषु आधारितम् 'प्रदर्शनी' इति चित्रकलाप्रदर्शनस्य समुद्घाटनं अपराह्नः त्रिवादने पूज्यस्वामिनः श्रीहरिचैतन्य ब्रह्माचारिणो महाभागाः करिष्यन्ति।

### चन्द्रा अहूलवालियां मीडिया प्रभारी मनोनीतः



**प्रयागराजः। वार्ताहरः।** पत्रकार संदीप वालिया महोदयस्य धर्मपत्नी श्रीमतींचन्द्रा अहूलवालियां प्रयागराज महानगर भाजपा दलस्य जनपद मीडिया प्रभारी (महिलामोर्चा) मनोनीतः क्रियतेस्म।

### अधुना प्रदेशे सक्रियसङ्क्रान्ताः चतुःशतात् अपि न्यूनाः, 339सङ्ख्यकानि प्राणवायुसंयन्त्राणि अभवन् क्रियाशीलानि

# अन्येषां प्रदेशानाम् अपेक्षया उत्तरप्रदेशे सक्रिय सङ्क्रान्ताः न्यूनाः, परीक्षणे उत्तरप्रदेशः प्रथमः



**लखनऊ।** अन्येषां प्रदेशानाम् अपेक्षया उत्तरप्रदेशस्य स्थितिः तीव्रतया उत्तमा भवति । सक्रियसङ्क्रान्ताः भवन्तु अपि च परीक्षणस्य सूच्यौषधीकरणस्य वार्ता प्रदेशसर्वकारेण समये स्वीकृतानां निणर्यानाम् एव परिणामः अस्ति यत् अद्य सर्वाधिकः जनसङ्ख्याकः उत्तरप्रदेशः अन्येषां प्रदेशानाम् अपेक्षया कोरोनासङ्क्रमणे नियन्त्रणं स्थापयितुं प्रथमः अस्ति । न्यूनसमये परीक्षणस्य सामर्थ्यं तीव्रतया वधर्यता अद्य प्रदेशे प्रतिदिनं सार्धद्विलक्षानि कोरोनासङ्क्रमणस्य परीक्षणानि क्रियन्ते । अधुना पर्यन्तं प्रदेशे 7,10,73,105सङ्ख्यकानि कोरोनासङ्क्रमणस्य परीक्षणानि कृतानि । गतचतुर्विंशतिहोरासु 187218सङ्ख्यकानां कोविडप्रतिदर्शानां परीक्षणं कृतं येषु द्वाविंशतिः न्यूनसङ्क्रान्ताः लब्धाः ।

प्रदेशे सक्रियकोविडसङ्क्रान्तानां सङ्ख्या अधुना चतुःशतात् न्यूनीभूय पञ्चचत्वारिंशत्यधिकत्रिशतम् अभवत् । या अन्येषां प्रदेशानाम् अपेक्षया बहूत्तमा अस्ति । अन्येषु राज्येषु उत्तरप्रदेशस्य अपेक्षया अनेकगुणितोऽधिकाः नूतनसङ्क्रान्ताः प्रतिदिनम् आयान्ति, तत्रैव मुख्यमन्त्रिणः योगिनः कुशलनेतृत्वे स्वीकृतैः निणर्यैः प्रदेशे सक्रियसङ्क्रान्तानां सङ्ख्या तीव्रतया न्यूना अभवत् । जनसङ्ख्याम् उद्दिश्य उत्तरप्रदेशस्य अपेक्षया बहुन्यूना जनसङ्ख्याकासु राज्येषु अधुना अपि सङ्क्रमणे नियन्त्रणं न प्राप्तम् । सक्रियसङ्क्रान्तानां वार्ता कुर्मः तर्हि अत्र उत्तरप्रदेशे सक्रियसङ्क्रान्ताः प्रतिदिनं न्यूनाः भवन्ति तत्रैव महाराष्ट्रे 49,752सङ्ख्याः, केरले 1,59,355सङ्ख्यकाः, कर्नाटके 19,784सङ्ख्यकाः, तमिलनाडोः 18,603 सङ्ख्यकाः, आन्ध्रप्रदेशे 13,677सङ्ख्यकाः, उड़ीसाप्रदेशे 7,885सङ्ख्यकाः, असमे 6,658सङ्ख्यकाः, पश्चिमबङ्गाले 9,217सङ्ख्यकाः, तेलङ्गानाप्रदेशे 6,276सङ्ख्यकाः आहत्य कोरोनासङ्क्रमणस्य सङ्क्रान्ताः अभिलिखिताः ।

### 339सङ्ख्यकानि प्राणवायुसंयन्त्राणि अभवन् क्रियाशीलानि

सम्भावितृतीयलहरीम् उद्दिश्य अधुना पर्यन्तं पूर्णप्रदेशे 339सङ्ख्यकानि प्राणवायुसंयन्त्राणि क्रियाशीलानि । प्रदेशे प्रायेण 552सङ्ख्यकानि प्राणवायुसंयन्त्राणि क्रियाशीलानि कर्तुं लक्ष्यं राज्यसर्वकारेण निर्धारितम् । एतेषां प्राणवायुसंयन्त्राणां सक्रियेन भविष्ये अपि प्रदेशस्य चिकित्सालयेषु प्राणवायोः न्यूनता न भविष्यति । प्रदेशे कोरोनासङ्क्रमणस्य स्वास्थ्यलाभान्वितानां प्रतिशतं 98.6प्रतिशतम् अस्ति तत्रैव सङ्क्रान्तानां प्रतिशतं 0.01 प्रतिशतम् अस्ति।



### गतचतुर्विंशतिहोरासु प्राप्ताः द्वाविंशतिनूतनाः सङ्क्रान्ताः



### सूच्यौषधी करणे उत्तर प्रदेशः प्रथमः

चतुर्विंशतिकोटिनां जनसङ्ख्यकस्य उत्तरप्रदेशस्य अपेक्षया देशस्य अन्याः प्रदेशाः सूच्यौषधीकरणे बहु पृष्ठे सन्ति । पश्चिमबङ्गालेन, महाराष्ट्रेन, देहल्या सह अन्येषु प्रदेशेषु यत्र न्यूनजनसङ्ख्या कारणेन सूच्यौषधिकरणं न्यूनगत्या प्रचलति तत्रैव उत्तरप्रदेशः निरन्तरं कीर्तिमानं निर्माति । उत्तरप्रदेशे अधुना पर्यन्तं त्रिपञ्चाशतलक्षषड्कोट्यधिकानि सूच्यौषधीकरणानि कृतानि। येषु अधुना पर्यन्तं नवचत्वारिंशतलक्ष पञ्चकोट्यधिकेभ्यः प्रथमा मात्रा अपि च त्रिलक्षैककोट्यधिकेभ्यः द्वितीया मात्रा अपि प्रदत्ता।



# स्वरोजगारमहाकुम्भेन यूनाम् आशा समुन्नीता

### उत्तरप्रदेशस्य युवभ्यः आत्मनिर्भरत्वेन सह वृत्तौ योजयितुं कृताः प्रयासाः



### अगस्तमासस्य एकादशदिनाङ्क्तः आरब्धासु योजनासु अद्य पर्यन्तं 1,11,000 सङ्ख्यकेभ्यः युवाहस्त शिल्पिभ्यः प्राप्तं प्रशिक्षणम्

### सितम्बर मासे सूक्ष्म– लघु– मध्यम– उद्यमाय, एकजनपद– एकोत्पादस्य लाभार्थिभ्यः सर्वकारेण स्थापयिष्यते मण्डलस्तरे वृहद् शिविरम्



### वृत्तिंत्रस्थापयितुं वृहच्छिविरेषु लाभार्थियुवभ्यः 7500 कोट्यधिकस्य स्वीकृतं ऋणम

**लखनऊ।** राज्यसर्वकारस्य स्वरोजगारमहाकुम्भयोजना उत्तरप्रदेशस्य यूनाम् आशा समुन्नीता। तेभ्यः आर्थिकरूपेण दृढतया सह वृत्त्या योजयति । युवानः विभिन्नकौशलकार्यक्रमाणां प्रशिक्षणं स्वीकुर्वन्ति। स्वस्य वृत्तिं संस्थाप्य आत्मनिर्भरं भवितुं पदानि वधर्यन्ति । सूक्ष्म–लघु–मध्यम–उद्यमस्य, स्वरोजगारस्य, एकजनपद–एकोत्पादस्य लाभार्थिभ्यः ऋणं वितरयितुं वृहद् शिविराणाम् अपि आयोजनं जनपदस्तरे क्रियते । सर्वकारस्य योजनया प्रदेशस्य शिक्षितनिर्वृत्तिकयूनां समस्या दूरीभवति । प्रवीणपरिश्रमिभ्यश्च युवभ्यः स्वकीय बलेन उत्थानं कर्तुम् अवसरः प्राप्यते । मुख्यमन्त्रिणा योगिना आदित्यनाथेन प्रदेशस्य युवभ्यः स्ववृत्त्या योजयितुं मुख्यमन्त्रियुवस्वरोजगारयोजनायाः शुभारम्भः अगस्तमासस्य एकादशदिनाङ्के कृतः । योजनान्तर्गतं युवभ्यः वित्तकोषेन ऋणेन सहैव अन्यं सहयोगं दत्त्वा स्वरोजगारं प्रति आकर्ष्यते । एतस्यान्तर्गतं अधुना पर्यन्तं 1,11,00सङ्ख्यकेभ्यः युवा हस्त शिल्पिभ्यः प्रशिक्षणं प्रदातुं कार्यं प्रचलति। राज्य सर्वकारेण अगस्त मासस्य एकादशदिनाङ्क्तः प्रदेशस्य समस्तेषु जनपदेषु वृहच्छिविराणाम् आयोजनं कृत्वा 7500 कोट्यधिकस्य ऋणं सूक्ष्म– लघु– मध्यम– उद्यमस्य, स्वरोजगारस्य, एकजनपद–एकोत्पादस्य, प्रधानमन्त्रिस्वनिध्याः लाभार्थिभ्यः स्वीकृतम्। सर्वकारेण बहुशीघ्रं प्रदेशस्य अन्येभ्यः युवभ्यः अपि योजनायाः लाभः प्रदातुं अस्य प्रकारस्य वृहद् शिविरा योजनस्य निर्देशः प्रवृत्तः । सर्वकारस्य लक्ष्यं अधिकाधिकेभ्यः युवभ्यः वृत्त्या संयोज्य प्रदेशाय उन्नतिः प्रदानम् अस्ति ।

## तृतीय संभावितं तरंगं पश्यन् मुख्यमंत्री कठोरः



**लखनऊ।** कोरोनायाः तृतीय संभावितं तरंगंपश्यन् मुख्य मंत्री उत्तर प्रदेशस्य कठोरः अभवत् तर्हि आरक्षी अपि सक्रियोजातः। रात्रौ 10 वादनान्तरे विपणिउद्घाटिते सतिक्रियान्वयनं एक घण्टात्मकं पूर्वं ध्वनिं उद्घोष्य आरक्षी दलं सतर्कं करिष्यति।

### कोविड्वाक्सिनस्य पञ्जीकरणं 'वाट्सप' द्वारा शक्यते



**नवदेहली।** कोविड् वाक्सिनाय इतःआरभ्य वाट्-साप्सङ्केतमुपयुज्यापि पञ्जीकर्तुं शक्यते। केन्द्र स्वास्थ्य मन्त्रिणा मन्सूख् माण्डव्येनेदं ट्विटर द्वारा निगदितम्। कृतवाक्सिनस्य प्रमाणपत्रं वाट्साप् द्वारा लब्धुं सुविधा गतदिनेषु विधत्ता आसीत्। पञ्जीकरणम् एवं विधं - My Govindia Corona Helpdesk इत्यस्य 9013151515 इति वाट्साप् संख्यां प्रति Book Slot इति प्रेषणीयम्। तदनन्तरं लभ्यमानस्य 'ओ टि पि' संख्यायाः प्रेषणेन वाक्सिनस्वीकरणाय स्थानं, तिथिः, कालश्च सुविधानुसारं चयनं कर्तुं शक्यते।

## सम्पादकीयम्

# चीनदेश एकोऽवसरवादी कृतघ्नोऽसत्यवादी चास्ति

वर्तमानसमयेऽस्मद्देशस्य समक्षे या समस्या लद्दाकपरिक्षेत्रे परिव्याप्ता वर्तते, सा समस्या पूर्वे एवासीत्, यत्समाधानं तदानीं सम्यक्प्रकारेण न जातम्। चीनदेशस्य सैनिकाः लद्दाखनाम 'गलवान' इति परिक्षेत्रे या दुष्कृत्यं कृतवन्तः, तत्परिणामे वयं सर्वे भारतीयाः कदापि चीनदेशस्य कानिचिदुत्पादानि क्रयं न करिष्यामः चीनदेश एकोऽवसरवादी कृतघ्नोऽसत्यवादी चास्ति। अयं शत्रु देशस्य मिलित्वा, दुर्सभिसंन्धिं कृत्वास्मद्देशस्य पराभवं कर्तुं कारयितुञ्च सदा षडयन्त्रं रचति। गतदिवसे चीन सैनिकाः छलकपटा दीनामाश्रयं नीत्वा अस्मद्देशस्य विंशतिसैनिकानां हत्यां कृतवन्तः। तदनन्तरमस्मद्देशस्य वीरसैन्यबलेन तेषां दुष्टानां समुचितमुपचारः कृतः। अस्मिन्सन्दर्भे अस्माकं यशस्विनः प्रधानमन्त्रि महाभागेन एका संगोष्ठी आयोजिता यस्यां सर्वे राजनीतिकदलाः समागत वन्तः, यस्यां कांग्रेस-वामपन्थ-दलसदस्याः भारत चीन वर्तमान विवादविषये बहवः प्रश्नाः कृतवन्तः। ते भारतसर्वकारं प्रति स्व-असहमतिं प्रकट्याकुर्वन्। प्रधानमंत्रि मोदि महाभागेन कथितं देशस्य सुरक्षा सर्वोपरि वर्तते। इदानीं देशहित सर्वोपरि वर्तते, अत एव सर्वे राजनीतिकदला इदानीं पारस्परिकं द्वन्दं विस्मृत्य केवलं देशस्य सुरक्षां प्रति कटिबद्धा भवन्तु तर्हि बहुशोभनं संदेशं सर्वत्र परिव्याप्तं भविष्यतीति मे मन्ये।

## 'अये दक्षिणेन वृक्षवाटिकायामालाप इव श्रूयते'

अत्र पुरुषद्वयधृतपटेनावृत्तप्रवेशः शक्यः। प्रवेशानन्तरं पटापसरणं भवति। अन्यथा एतादृशप्रवेशा रङ्गशीर्षे यवनिकायाः पार्श्वे भवितुमर्हन्ति। एतादृशाः प्रवेशसूचनाः सर्वेषु नाटकेषु दृश्यन्ते। परं पटान्तर्गतप्रवेशः यवनिकायाः पार्श्वे उपविष्टा वेति नाट्यसूचना न दृश्यते कुत्रापि। अतः स्पष्टं न ज्ञायते यद् प्रवेशार्थं यवनिकायाः प्रयोगः क्रियते वा न वेति। भवभूतिना मालतीमाधवे चित्रयवनिकायाः उल्लेख कृतः। एतेन ज्ञायते यत् चित्राङ्कितचलत्पटयुक्तेयं यवनिका। अस्याः पार्श्वे वेषपरिवर्तनमुपविष्टनटानां वा आसनस्थनटानां प्रवेशो भवतीति। अस्याः चित्राङ्कितयवनिकायाः वर्णनं न भरतमुनिना कृतं नापि च पूर्वतनभासादिभिः नाटककारैः कृतम्। भासस्तु यवनिकायाः उल्लेखं करोति। सैव चित्रयवनिका स्यात्। भवभूतिना प्रथममेव यवनिकायाः चित्रयवनिकेति नामनिर्देशः कृतः। आधुनिककाले केरलप्रदेशे कृष्णाट्टम कुडियाट्टं शैल्यां नाटकानां प्रयोगो भवति तत्र एतादृश चित्रयवनिकायाः उपयोगो भवति। मालतीमाधवस्य षष्ठाङ्के कामन्दकीवचनानुसारं मालत्याः वैवाहिकवेषधारणार्थं मकरन्दः वदति - 'यदाज्ञापयासि यावदितश्चित्रयवानिकामन्तर्धाय नेपथ्यं धारयामि।'। मत्तवारणी - रङ्गपीठस्य उभयपार्श्वे चतुःस्तम्भसमायुक्ता मत्तवारणी कर्तव्येति भरतस्य निर्देशः। अभिनयार्थं विशेषस्थानमिदम्। यदा रङ्गमञ्चे विभाजनं दर्शयितव्यं तदा मत्तवारण्या उपयोगः क्रियते। यथा स्वप्नवासवदत्तस्य चतुर्थाङ्के उदयनविदूषकयोः वार्तालापं माधवीलतामण्डपे उपविष्टे पद्मावतीवासवदत्ते शृणुतः। अस्य माधवीलतामण्डपस्य स्थानं मत्तवारण्यां भवितुमर्हति। भासेन तादृशः निर्देशः अत्र न दत्तः। परमेतेन रङ्गमञ्चविभाजनेन एकस्येव रङ्गमञ्चस्य अभिनयक्षेत्रं भिन्नमिति भाति। रङ्गमञ्चेऽभिनयस्य कृते विभिन्नानि स्थानानि सन्ति यथा रङ्गपीठं रङ्गशीर्षं मत्तवारणीद्वयञ्च। एतानि सर्वाणि स्थानानि दर्शकाणां कृते प्रत्यक्षदर्शनयोग्यानि। अत एव अभिनयस्य कृते योग्यानि। अभिज्ञानशाकुन्तस्य प्रथमाङ्के मृगानुसारी दुष्यन्तस्य प्रवेशः नेपथ्यगृहस्योत्तरद्वारेण रङ्गशीर्षे भवति। दुष्यन्तः चन्द्रवंशी राजा। नाट्यशास्त्रानुसारं गङ्गाया उत्तरभागे निवसन्तः मध्यमाप्रवृत्तिमनुसरन्त उत्तरद्वारेण प्रविशन्ति। अत्र नाट्यसूचना वर्तते - ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा रथेन सूतश्च। अत्र 'रथवेगं निरूप्य' इत्यनया नाट्यसूचनया ज्ञायते यद् दुष्यन्तः रथवेगमभिनयेन दर्शयति। हरिणस्य वेगं दर्शयितुं कालिदासेन तस्य स्वभावोक्तिपूर्णं वर्णनमपि कृतम्। शकुन्तलायाः प्रवेशः दक्षिणद्वारेण भवति। 'अये दक्षिणेन वृक्षवाटिकायामालाप इव श्रूयते' इति दुष्यन्तस्य वाक्येनानेन सखिभिः सह शकुन्तलायाः प्रवेशस्य स्थानं सूचितम्। शकुन्तला वृक्षसेचनं रूपयित्वा रङ्गशीर्षात् रङ्गपीठेऽवतरति। दुष्यन्तः पादपान्तर्हितो भूत्वा तासां वार्तालापं शृणोति। शकुन्तलायाः भ्रमरबाधाप्रसङ्गादनन्तरं यदा राजा ताभिः सह वेदिकायामुपविशति सा वेदिका मत्तवारण्यां भवितुमर्हति। प्रसङ्गेनानेन रङ्गमञ्चस्य प्रायः सर्वाणि स्थानानि दर्शितानि। रङ्गमञ्चस्य विभाजनमपि शक्यते।नगरे वा वने वापि वर्षे वा पर्वतेऽपि वा। यत्र वार्ता प्रवर्तते तत्र कक्ष्यां प्रयोजयेत्। कक्षाविभाजनं बहुषु नाटकेषु दृश्यते परं मत्तवारण्याः नामनिर्देशः न दृश्यते। राजशेखरस्य विद्धशालभञ्जिकायां द्वितीयाङ्के प्राप्यते ईदृशः निर्देशः। अत्र विदूषकः राजानं वदति - भोः पोगण्डा इव उर्ध्वजानुकौ कियच्चिरं स्थास्यावः। तस्मादेही मत्तवारणोपरि उपविशावः। (तथा कुरुतः) अत्रैव पुनः विदूषकः वदति, 'तदेहि अवतरावः। (इति उभाववतरणं नाट्यतः)। मत्तवारणीविषये नारायणदीक्षितेन स्पष्टीकृतम्' वालापं मत्तवारणम्। सैव मत्तवारणी कपोतपालिकेति केचित्। गजदन्तैः कृता शाला विज्ञेया मत्तवारणीत्यन्ये वातायनानामग्रे उपवेशार्थं दारुभिः पाषाणैर्वा निर्मितं स्थलमित्यपरे। विदूषकस्य मत्तवारणोपरि अधिरोहणमवतरणश्च तस्मात् स्पष्टं भवति। उत्तररामचरितस्य सप्तमाङ्के गर्भाङ्कस्य प्रयोगः भवभूतिना कृतः। अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान्। अङ्कोपरः स गर्भाङ्कः सबीजः फलवानपि। अङ्कस्य प्रारम्भे लक्ष्मणः वदति - 'भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमान्त्रिताः स्म।'गङ्गातीरमातोद्यस्थानमुपगम्य क्रियतां समाजसंनिवेशः। प्रयोगस्यास्य कृते अस्थायीरुपेण प्रेक्षागृहस्य व्यवस्था कारिता स्यात्। अत एव गङ्गातीरे इत्युक्तम्। प्रयोगोऽयं रङ्गशीर्षे भवितुमर्हति। यतोहि गर्भाङ्कस्य पात्राणां नेपथ्यगृहाद् गमनागमनार्थं तत्र सौविध्यं भवेत्। रामेण सह राजपरिवारः रङ्गपीठे उपविष्टः स्यात्। नाट्यस्थितप्रजाजनामुपवेशनं उभयपार्श्वस्थितमत्तवारण्योर्मध्ये भवेत्। एतादृशयोजनेन दर्शका अपि गर्भाङ्के कृतं नाटयप्रयोगं द्रष्टुं पारयन्ति। सङ्गीतम् संस्कृतनाटकनामविभाज्यमङ्गं नाम सङ्गीतम्। अतः वादकानां गायकानाञ्च योजना रङ्गमञ्चे भवत्येव। भरतेनोक्तम्- एवं गीतं च वाद्यं च नाट्यं च विविधाश्रयम्। अलातचक्रप्रतिमं कर्तव्यं नाट्ययोक्तृभिः। नाट्येन सह गानस्य वाद्यस्य च योजनाखण्डितरूपेण भवत्वित्यर्थः। अतः गायकवादकानां स्थानं रङ्गमञ्चे एव भवितुमर्हति । षड्दारुकसमान्वितं रङ्गशीर्षं भवत्विति भरतेनोक्तम्। षड्दारुकं नाम काष्ठयुक्तं विभाजकम्। रङ्गशीर्षे षड्दारुकस्य पार्श्वे गायकवादकानां स्थानमासीत्। कुतपविन्यासः तत्रैव भरतेनोक्तः। ये नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते।

# 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'

अद्वैतवेदान्तमते समाधेः स्वरूपज्ञानात् पूर्वं समाधेः किं प्रयोजनं तद्विषये आलोचनं कुर्मः। यतो हि 'प्रयोजनम् अनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायस्तु जगति वर्तते एव। 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः' इत्यद्वैतवेदान्तस्य सिद्धान्तः। तस्य च नित्यशुद्धमुक्तस्य ब्रह्मणः प्राप्तौ उपायरूपेण श्रवण-मनन-निदिध्यासनानि श्रुतौ आम्नातानि। एतानि चत्वारि साधनानि प्राधान्येन वेदान्तदर्शने आत्मसाक्षात्कारस्य कृते वर्णितानि। श्रुतिश्च - 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति। ननु श्रवण-मनन-निदिध्यासनानां ब्रह्मलाभोपायत्वेन कथनात् समाधेः का आवश्यकता। अस्मिन्प्रसङ्गे वेदान्तसारे सदान्दयोगीन्द्रपादैः प्रोच्यते यत् 'स्वस्वरूपचैतन्य-साक्षात्कारपर्यन्तं श्रवण-मनन-निदिध्यासन-समाध्यासनसमाध्यनुष्ठानस्य अत्यन्तापेक्षितत्वात् ते अपि प्रर्दश्यन्ते' इति। यावत् कालपर्यन्तं स्वस्वरूपचैतन्यस्य साक्षात्कारः न भवति तावत् पर्यन्तं समाधेः आवश्यकता वर्तते। अत्र जीवात्मातः अभिन्नपरामात्माखण्डचैतन्यसाक्षात्कारः भवति ब्रह्माकारान्तःकरणवृत्त्यापि। अपि च एषा ब्रह्माकाराचित्तवृत्तिः परमात्मनः साक्षात्कारं कारयति तदेव विचार्यम्। अस्याः बह्माकाराकारितावृत्तेः उत्थानाय श्रवण-मनन-निदिध्यासन-समाधीनाम् आवश्यकता वर्तते। अत्र प्रश्नो भवति यत् समाधेः अभ्यासः किं बारं बारं कर्तव्यम् वा? यतो हि आवृत्तिरकृत् उपदेशात् इति ब्रह्मसूत्रम् अस्ति। अनेन सूत्रेण प्राप्यते यत् एकबारं आवृत्तिः क्रियते चेत् ब्रह्मसाक्षात्कारः न भवति। अतः बारं बारं करणीयः अभ्यासः। अपि च सङ्गीतादिशास्त्रे स्वरादिसाक्षात्करणाय यथा बहुबारम् अभ्यासस्य आवश्यकता वर्तते। तथैव ब्रह्मसाक्षात्काराय श्रवणामननादीनां बारं बारम् अभ्यासः करणीयः एव। अतः एव उच्यते यावत् पर्यन्तं ब्रह्मसाक्षात्कारो न भवति तावत्पर्यन्तं तु समाधेः अभ्यासः करणीयः एव।

किञ्च पञ्चदशीटीकाकारैः रामकृष्णाचार्यैः अपि प्रोक्तं यत् 'निदिध्यासनस्य परिपक्वावस्था समाधि'रिति। तन्नाम निदिध्यासनस्य अभ्यासवशात् यदा परिपक्वता जायते तदा समाधिः इत्युच्यते। न केवलं शास्त्रेषु समाधेः प्रयोजनं दृश्यते। श्रुतिषु अपि समाधेः प्रयोजनं दृश्यते। तद्यथा- 'तस्यापि ध्यानाद्योतनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्वेताश्वतरीयमन्त्रः समाधिं अनुष्ठेयं सूचयति। जाबालोपनिषदि दृश्यते यत् 'समाधिः संविदुत्पत्ति परजीवैकतां प्रति' इति। किञ्च 'सहकार्यान्तविधिः पक्षेण तृतीयं तद्वतः विध्यादिवत्' इति न्यायेन अयम् अर्थः निर्णीतः। अतः निदिध्यासनाद् उत्तरमपि समाधेः उपायरूपेण अङ्गीकारः अद्वैतवेदान्तग्रन्थेषु सुलभः। कुञ्चिकाशब्दाः - समाधिः, वृत्तिः, निर्विकल्पकः, सविकल्पकः, मननम्, श्रवण्, निदिध्यासनम्, विधिः आदिः अद्वैतवेदान्तमते समाधेः स्वरूपज्ञानात् पूर्वं समाधेः किं प्रयोजनं तद्विषये आलोचनं कुर्मः। यतो हि प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति न्यायस्तु जगति वर्तते एव। 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः'[1] इत्यद्वैतवेदान्तस्य सिद्धान्तः। तस्य च नित्यशुद्धमुक्तस्य ब्रह्मणः प्राप्तौ उपायरूपेण श्रवणमनननिदिध्यासनानि श्रुतौ आम्नातानि। श्रुतिश्च - 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति। ननु श्रवणमनननिदिध्यासनानां ब्रह्मलाभोपायत्वेन उक्तत्वात् समाधेः का आवश्यकता। अस्मिन्प्रसङ्गे वेदान्तसारे सदानन्दयोगीन्द्रपादैः प्रोच्यते यत् 'स्वस्वरूपचैतन्यसाक्षात्कारपर्यन्तं श्रवणमनननिदिध्यासन समाध्यासनसमाध्यनुष्ठानस्य अत्यन्तापेक्षितत्वात् ते अपि प्रर्दश्यन्ते' इति। किञ्च पञ्चदशीटीकाकारैः रामकृष्णाचार्यैः अपि प्रोक्तं यत् 'निदिध्यासनस्य परिपक्वावस्था समाधि'रिति। न केवलं शास्त्रेषु समाधेः प्रयोजनं दृश्यते। श्रुतिष्वपि समाधेः प्रयोजनं दृश्यते। तद्यथा - 'तस्यापि ध्यानाद्योतनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्वेताश्वतरीयमन्त्रः समाधिं अनुष्ठेयं सूचयति। जाबालोपनिषदि दृश्यते यत् 'समाधिः संविदुत्पत्ति परजीवैकतां प्रति' इति। किञ्च 'सहकार्यान्तविधिः पक्षेण तृतीयं तद्वतः विध्यादिवत्' इति न्यायेन अयम् अर्थः निर्णीतः। अतः निदिध्यासनादुत्तरमपि समाधेः उपायरूपेणाङ्गीकारः अद्वैतवेदान्तग्रन्थेषु सुलभः। स्वरूपम् ननु प्रयोजनं तु ज्ञातं परन्तु जगति लक्षणप्रमाणाभ्यां वस्तु सिद्धिः इति नियमः। अतः समाधेः किं लक्षणमिति तद्वक्तव्यं खलु। अस्य प्रश्नस्य समाधानाय अद्वैताचार्यैः समाधेः लक्षणं प्रोक्तं तद् क्रमशः वर्ण्यते। वेदान्तसारकृत्सदानन्दयोगीन्द्रमतम् यद्यपि आचार्यसदानन्दैः साक्षात्समाधेः लक्षणं न प्रोक्तं तथापि भेदपुरस्सरं समाधेः लक्षणं प्रोक्तम्। तद्यथा समाधिः द्विविधः सविकल्पकः निर्विकल्पकश्चेति। सविकल्पकसमाधिः कस्तावत् सविकल्पकसमाधिः इति चेदुच्यते आचार्येण यत् ज्ञातृज्ञेयादिविकल्पलयानपेक्षया अद्वितीयवस्तुनि तदाकाराकारितायाः चित्तवृत्तेः अवस्थानम्। तन्नाम ज्ञातृज्ञेयादित्रिपूटीलयानपेक्षया अद्वितीयवस्तुनि ब्रह्मणि तदाकाराकारितायाः ब्रह्माकाराकारितायाः चित्तवृत्तेः अन्तःकरणवृत्तेः अवस्थानं निश्चलावस्थितिः समाधिः इति। ननु अद्वैतवस्तुमात्रावधारणार्थं समाधेः कथनं, परन्तु सविकल्पकसमाधौ न केवलमद्वैतवस्तु भासते इतरविकल्पाः अपि भासन्ते। अतः 'भक्षिते अपि लशुने न शान्तो व्याधिः' इति न्यायेन उक्तसविकल्पकसमाध्योः सकलभेदनिराकरणाय प्रवर्त्तनात् तयोः अपि ज्ञात्रादिभेदविषयकत्वेन अत्र दोषो वर्तते। अस्य प्रश्नस्य समाधानाय सदानन्दयोगीन्द्रपादैः प्रोक्तं यत् मृन्मयगजादिभाने अपि मृद्भानवत् द्वैतभाने अपि अद्वैतवस्तु भासते इति। तथा हि शास्त्रम् -दृशिस्वरूपं गगनोपमं परं सकृतद्विभातं त्वजमेकक्षरम्। अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्तमोम्।

अयमेव समाधिः पतञ्जलियोगशास्त्रे सम्प्रज्ञातसमाधिः इति अभिधीयते। सदानन्दयोगीन्द्रमते निर्विकल्पसमाधिस्तावत् ज्ञातृज्ञानादिविकल्पलयपेक्षया अद्वितीयवस्तुनि तदाकाराकारितायाः चित्तवृत्तेः अतितरामेकीभावेन अवस्थानम् इति। तन्नाम त्रिपूटीलयापेक्षया ब्रह्मणि ब्रह्मकाराकारितायाः चित्तवृत्तेः अन्तःकरणस्य अत्यन्तभेदरूपेण निश्चलावस्थितिः एव निर्विकल्पकसमाधिः इति। तन्नाम अन्तःकरणस्य पृथक्सत्ता नानुभूयते। प्रसङ्गे अस्मिन् भगवता श्रीरामकृष्णेन प्रोक्तं यत् लवणनिर्मिता मूर्तिः सागरे पतति चेद् मूर्ते पृथक्सत्ता नानुभूयते सागराकारेण आकारिता भवतीति। तथैव अन्तःकरणवृत्तेः ब्रह्मसत्तामात्रं भवति न तु पृथक्सत्ता। अयमेव समाधिः योगशास्त्रे असम्प्रज्ञातसमाधिः इत्युच्यते। तथाहि गीतायां भगवता श्रीकृष्णेन प्रोक्तम् - यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृताः। योगिनो यतचित्तस्य युञ्जत योगमात्मनः। ननु प्रश्नो सम्भवति सुषुप्तावपि अन्तःकरणवृत्तिः न तिष्ठति। अतः निर्विकल्पकसमाध्योः को भेदः। प्रश्नस्यास्य समाधानाय योगीन्द्रपादैः प्रोक्तं यत् उभयत्र वृत्त्यभाने समाने अपि तत्सभावासद्भावमात्रेण अनयोः भेदोपपत्तेः। तन्नाम समाधौ अज्ञायमानवृत्तिसद्भावात् सुषुप्तौ वृत्त्यभावाच्च तयोः भेदोपपत्तेः इत्यर्थः। सुबोधिनीटीकाकारश्रीनृसिंहसरस्वतीमतम् - वेदान्त सारटीकाकार श्रीनृसिंहसरस्वतीपादैः समाधेः भेदकथनात् पूर्वं साधारणलक्षणं प्रोक्तं यत् 'व्युत्थाननिरोधसंस्कारयोः अभिभवप्रादुर्भावे सति चित्तस्य एकग्रतारूपपरिणामः समाधिः' इति। अत्र व्युत्थानसंस्कार इत्युक्ते जगद्विषयक संस्कारः। निरोधसंस्कार इत्युक्ते ब्रह्मभिन्नविषयकचित्तवृत्तिनिरोधात् य संस्कार उत्पद्यते तत् निरोधसंस्कारः इति। सुबोधिनीकारः सविकल्पकसमाधेः अपि भेदद्वयमवादीत्। तद्यथा अहं ब्रह्मास्मि इति शब्दानुविद्धतया अद्वितीये वस्तुनि चित्तवृत्तेः अवस्थानम् इति एकः। द्वितीयस्तु ज्ञातृज्ञानज्ञेय त्रिपुटीलयानपेक्षया अहं ब्रह्मास्मि इति शब्दाननुविद्धतया अद्वितीये वस्तुनि अविच्छेदेन चित्तवृत्तेः अवस्थानम् इति। आचार्येण निर्विकल्पकसमाधेरपि भेदद्वयमुक्तम्। तद्यथा चिरकालाभ्यस्तयदुत्तरसविकल्पक-समाध्यन भवजनित संस्कारसहकृतायाः चित्तवृत्तेः ज्ञात्रादित्रिपुटीलयपूर्वकमद्वैते वस्तुनि एकभावनात्मकः प्रथमः। एतत् निर्विकल्पक समाध्यभ्यासपाटवेन लुप्त संस्कारतया ज्ञात्रादित्रिपुटीलय पूर्वकम् अखण्डाकाराकारितायाः चित्तवृत्तेः विनापि स्वस्फूर्तिं केवलचिदानन्दात्मनावस्थानात्मकः द्वितीय। विद्वन्मनो रञ्जनीकार श्रीरामतीर्थाचार्यमतम् वेदान्त सारटीकाकारेण श्रीरामतीर्थाचार्येण समाधेः सामान्यलक्षणं प्रोक्तं यत् 'चित्तस्य ज्ञयात्मना निश्चलावस्थानं समाधिः' इति। तन्नाम चित्तस्य अन्तःकरणस्य ज्ञेयात्मना ब्रह्मात्मना निश्चलावस्थानं निवातदीपवत् स्थितिः समाधिः इति। रामतीर्थमते अपि समाधिः द्विविधः। आचार्येण सविकल्पकसमाधिः इत्युक्ते सम्प्रज्ञातसमाधिः इति मन्यते। किञ्च निर्विकल्पकसमाधिः[8] इत्युक्ते असम्प्रज्ञातसमाधिः उच्यते आचार्येण। एतेन ज्ञायते यत् योगसम्प्रदायमतमेव अङ्गीकृतमाचार्येण।

परमाचार्यविद्यारण्यस्वामिपादेन समाधेः ब्रह्मप्राप्तौ उपायरूपेण अङ्गीकारः कृतः। ततः श्रवणमनननिदिध्यासनवर्णनपूर्वकं समाधेः वर्णनं कृतम्। आचार्येण समाधिः इत्यनेन निर्विकल्पकसमाधिः एव स्वीकृतः। सविकल्पकसमाधेः उल्लेखः न कृतः। आचार्यमते निदिध्यासनात् परमेव समाधिः भवति, स निर्विकल्पकसमाधिः एव। विद्यारण्य स्वामिना समाधेः लक्षणं प्रोक्तम् यत् - ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम्। निर्वातदीप वच्चित्तं समाधिरभिधीयते। निदिध्यासने तावद्ध्याता ध्यानं ध्येयञ्च इति त्रितयं भासते। यदा चित्तमभ्यासवशेन ध्यातृध्याने ध्यातारं क्रमात् परित्यज्य ध्येयैकगोचरं भवति तदा समाधिरित्युच्यते। अयं भावः अत्र केवलं परमचिन्तनीयवस्तुनि मनोवृत्तिः निश्चलीभूत्वा निर्वातप्रदीपशिखा इव अवस्थीयते। ब्रह्माभिन्नविषयभावना तदा न तिष्ठति। अद्वितीयज्ञानानन्दमयपरमपुरुषे मनः नियुक्तं भवति। एषा निश्चलास्थितिः एव समाधिः। अत्र प्रश्नो भवति ननु समाधौ वृत्तिनामनुपलब्धौ ध्येयैकगोरत्वमपि निश्चेतुं न शक्यते। तथा हि प्रोक्तं- वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः। स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थितात्। समाधौ चित्तवृत्तिविषयकज्ञानं न विद्यते परन्तु वृत्तेः अभावो न भवति। परमात्माविषयकान्तःकरणवृत्तेः अनुभवो न भवति। किन्तु समाधेः व्युत्थितस्य स्मरणादेतावन्तं कालं समाहितोभूवमित्येवं रूपादनुमीयन्ते यद् स्मर्यते तद् अनुभूतमिति। अतः वृत्तयः तिष्ठन्ति एव। किञ्च समाधितः व्युत्थानं भगवान्नामकृष्णादीनां दृष्टमस्ति। अतः समाधौ अन्तःकरणवृत्तेः सद्भावो वर्तते एव। पञ्चदशी टीकाकाराचार्य रामकृष्णमतम् रामकृष्णाचार्येण समाधेः लक्षणसमये प्रोक्तं यत् 'निदिध्यासनस्य परिपक्वावस्था एव समाधि'रिति। किञ्च रामकृष्णाचार्यमते अपि सविकल्पकसमाधेः अङ्गीकारः नास्ति। अतः आचार्येणापि विद्यारण्यमतमेव अङ्गीकृत्य निर्विकल्पकसमाधेः वर्णनं कृतम्। पञ्चदशीवेदान्तसारयोः समाधिस्वरूपसादृश्यम् समाधिस्वरूपविचारे सदानन्दयोगीन्द्र विद्यारण्ययोः सादृश्यं दृश्यते। तद्यथा उभयमते निर्विकल्पकसमाधौ अखण्डाकाराकारिताचित्तवृत्तिः वर्तते एव। परन्तु पतञ्जलियोगदर्शने निर्विकल्पकसमाधौ चित्तवृत्तेः अस्तित्वं नाङ्गीक्रियते।[11] तथा हि व्यासभाष्ये दृश्यते सर्वप्रत्यस्तमये संस्कारशेषो निरोधः चित्तस्य समाधिः अस्मप्रज्ञातः इति। अत्र अद्वैतवेदान्तशास्त्रे आचार्यमधुसूदनसरस्वतीमहाभागाः गौडब्रह्मान्दमहाभागाः अपि समाधौ चित्तवृत्तिं न स्वीकुर्वन्ति। परन्तु सदानन्दयोगीन्द्रमहाभागाः विद्यारण्यस्वामिपादाः आनन्दगिरिमहाभागाः समाधौ चित्तवृत्तिं स्वीकुर्वन्ति। किञ्च ताभ्यां निर्विकल्पकसमाधिः स्वीकृतः।

## 'तस्यापि ध्यानात् योजनात् तत्त्वभावात् भूयश्चान्तेः विश्वमाया निवृत्तिः'

पञ्चदशीवेदान्तसारयोः समाधिस्वरूपवैसादृश्यम्

यद्यपि उभयोः बहूनि सादृश्यानि सन्ति तथापि भूयशः मतपार्थक्यानि दरीदृश्यन्ते। तद्यथा वेदान्तसारे समाधिः द्विविधः सविकल्पकनिर्विकल्पकभेदात्, परन्तु पञ्चदश्यां तु निर्विकल्पकसमाधिः एव विद्यारण्येन प्रकोटीकृतः। किञ्च सुबोधिनीकारमते तु सविकल्पकनिर्विकल्पकयोः प्रकारद्वयं वर्तते। सविकल्पकस्य भेदद्वयं निर्विकल्पकस्य भेदद्वयम्, परन्तु पञ्चदशीटीकाकारेण समाधेः भेदः नोक्तः। निदिध्यानस्य परिपक्वदशा एव समाधि इति उच्यते। तन्नाम पञ्चदशीकारमते निदिध्यासने एव सविकल्पकसमाधेः अन्तर्भावो भवति पृथक्स्वीकारस्यावश्यकता नास्ति। पञ्चदशीकारः निर्विकल्पकसमाधिं योगशास्त्रप्रतिपादितधर्ममेधेन साकं तुलना कृतवान्, एतत् तु वेदान्तसारे नास्ति। तद्यथा- धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः। वर्षत्येष यतो धर्मामृतधारा सहस्रह समाधेः स्वरूपविषये उभयत्रापि समानता दृश्यते। परन्तु समाधिभेदविषये एव मतपार्थक्यं दृश्यते। अत्र प्रश्नो भवति समाधेः भेदकथनस्य आवश्यकता अस्त्यत न। समाधेः स्वरूपपरिशीलनं कृत्वा मया तु पञ्चदशीमतमेव अङ्गीक्रियते। यतो हि भेदकथनस्य आवश्यकता नास्ति। अत्र अद्वैतवेदान्तपरम्परायां सदानन्दयोगीन्द्रात् विद्यारण्य प्राचीनः। अनेन ज्ञायते पूर्वं वेदान्तशास्त्रेषु समाधेः भेदो नासीत्। परमाचार्यगौडपादैः माण्डूक्यकारियां समाधिः पदेन निर्विकल्पकसमाधेः उल्लेखः कृतः। तद्यथा- सर्वाभिलापविगतः सर्वचिन्तासमुत्थितः। सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोभयः। अपि च श्वेताश्वतरोपनिषदि अपि समाध्यत्यनेन निर्विकल्पकसमाधेः ग्रहणं दृश्यते। तद्यथा -'तस्यापि ध्यानात् योजनात् तत्त्वभावात् भूयश्चान्तेः विश्वमाया निवृत्तिः' इति। किञ्च शङ्कराचार्येणापि यत्र-यत्र समाधेः वर्णनं कृतं तत्र-तत्र समाधि इत्येव पदं प्रयुक्तं न तु सविकल्पकसमाधेः वर्णना कृता। तद्यथा- 'सर्वाभिलापविगत' इत्यास्याः कारिकायाः भाष्ये आचार्येण समाधिशब्देन निर्विकल्पकसमाधेः व्याख्या कृता। तथाहि समाधिपदस्य व्युत्पत्तिं प्रदर्शितवान् यत् 'समाधिनिमित्तप्रज्ञागम्यत्वात्, समाधीयते अस्मिन्निति समाधि'रिति।[14] किञ्च 'सहकार्यान्तविधि पक्षेण तृतीयं तद्वतो विध्यादिवत्' इत्यस्मिन् ब्रह्मसूत्रे शङ्कराचार्येणापि ब्रह्मप्राप्तौ उपायरूपेण समाधेः उल्लेखः कृतः, परन्तु सविकल्पकसमाधेः उल्लेखः तु कृतः। किञ्च सविकल्पकसमाधेः निदिध्यासने एव अन्तर्भावः युक्तः एव। वेदान्तसारे तु समाधेः भेदकरणं स्पष्टबोधार्थं। किञ्च प्रसिद्धयोगशास्त्रे समाधेः भेददर्शनात् अत्रापि भेदपुरस्सरं प्रोक्तमिति भावः।

## 'संवत्सरं वै प्रजापतिस्त स्यायने दक्षिणं चोत्तरञ्च

सकामकर्मिणः मूढाः इत्यतस्ते अविद्याकवलितः सन् तिष्ठति। ते अज्ञानकारणात् कर्मप्रियाः सन्तः आत्मानं कृतकृत्यं मन्यन्ते, परन्तु कर्मक्षये सति स्वर्गलोकात् च्यवन्ति। ते इष्टापूर्तमेव श्रेष्ठमिति मत्वा अन्यं श्रेयः नैवाचरति। अतः भोगसमाप्तेः अनन्तरं स्वर्गच्युतिः तेषां सुतरां सम्भवति। परन्तु ये तपसमेव श्रद्धापूर्वकमाचरन्ति साधयन्ति च तादृशमेव कर्म, तेन ते शान्ताः विद्वांसः भिक्षाचारिणः रजोहीनाः साधकाः सूर्यद्वारेण तत्तल्लोकं प्राप्नोति ततः पुनरावृत्तिः असम्भवा। तदेव अमृतस्य अव्ययपुरुषस्य परमं धाम। प्रश्नोपनिषदिऽपि पितृयानस्य देवयानस्य विषये च आम्नायते, 'संवत्सरं वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरञ्च। एष ह वै रयिर्यः पितृयाणः।' इत्थं प्रकारेण अग्र 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्यायात्मानमन्विष्य आदित्यम् अभिजयन्ते। एतस्मात् न पुनः आवर्तन्ते इत्येष निरोधः।

# 'येनाक्षरं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्'

अद्यत्वे अस्माकं समीपे या 'विद्या' इत्याख्यया आख्यायते तस्या एव पूर्वतनसमाजे 'वेदः' इति अभिधा आसीत्। वेदस्य परमः सिद्धान्तः एव उपनिषन्निहितं वेदान्ततत्त्वम्। आश्रमविभाजिते प्राचीने आर्यसमाजे वानप्रस्थी यदा संसारं परित्यजन् वैराग्यप्राप्त्यै साधनचतुष्टयमभ्यसति स्म तदा तस्य आलोच्यमानः विषयः आसीत् उपनिषत्। उपनिषदां सामान्यपरिचयः - उपनिषच्छब्दस्य रहस्यमित्यर्थः; अध्यात्मविद्यारहस्यप्रतिपादिका वेदभागा उपनिषदः कथ्यन्ते । मुक्तिकोपनिषदि उपनिषदां संख्या अष्टोत्तरशतम् कथिता। तत्र 10 उपनिषदः ऋग्वेदसम्बद्धाः, 19 उपनिषदः शुक्लयजुर्वेदसम्बद्धाः, 3 कृष्णयजुर्वेदसम्बद्धाः , 16 सामवेदसम्बद्धाः , 31 अथर्ववेदसम्बद्धाः। तासु दशोपनिषदः प्रसिद्धाः ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरि। ऐतरेयञ्च छान्दोग्यं बृहदारण्यकं दश। श्वेताश्वतरोपनिषदेकादश्यपि प्रसिद्धा । प्रायशः सर्व एव वेदान्ताचार्याः एतासु दशोपनिषत्सु स्वमतानुसारिव्याख्यया भूषितवन्तः इत्यतः एताः दशोपनिषदः प्रसिद्धाः इत्यपि भवितुमर्हति । कतिचनोपनिषदः गद्यात्मिकाः कतिचन पद्यात्मिकाः, कतिचन गद्यपद्योभयात्मिकाश्च। आसामुपनिषदामाविर्भावकालः भिन्नः–भिन्नः , परं प्रसिद्धाः कतिचनोपनिषदः बुद्धकालात्प्राचीनाः एवेति सर्वसम्मतम् । किमिदमुपनिषद् - काठकोपनिषद्वल्लीनां सुखार्थप्रबोधनार्थम् शंकराचार्येन या अल्पग्रन्था वृत्तिराब्धा तत्र 'सदेर्धातोर्विशरणगत्यवसादनार्थस्य उपनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति "(कठ. उप. भा. भूमिका) एवं प्रकारेण उपनिषदः निर्वचनं निर्दिष्टम् । तत्र उपनिषदः इतोऽपि केचन अर्थाः आचार्यपादैः उल्लिखिताः, तत्र उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तु विषया विद्योच्यते । यतो हि मुमुक्षवः दृष्टानुश्रविकविषयवितृष्णाः सन्त उपनिषच्छब्दवाच्यां वक्ष्यमानलक्षणां विद्याम् उपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति, तेषामविद्यादेः संसारवीजस्य विशरणाद् हिंसनाद् विद्या उपनिषदित्युच्यते। स्वर्गलोकफलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रववृन्दस्य अवसादयितृत्वात् धात्वर्थयोगात् अग्निविद्याप्युपनिषदित्युच्यते। तत्र आचार्यपादः स्वयं कठोपनिषदः प्रमाणं प्रस्तौति स्वकीये भाष्ये, "स्वर्गलोका अमृतत्वं भजन्ते" अपरत्र बृहदारण्यक भाष्यभूमिकायामाचार्यपादः लिखति, 'सेयं ब्रह्मविद्या उपनिषच्छब्दवाच्या'। ब्रह्मैव उपनिषदः मुख्यं प्रतिपाद्यमिति आदावेव आलोचितम्। मुक्तिकोपनिषदि एव एतस्मिन् विषये उच्यते - 'येनाक्षरं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।' मुण्डकोपनिषद् तस्याः व्याख्यानानि च - प्रसिद्धासु दशोपनिषत्सु मुण्डकोपनिषदः स्थानं अन्यतमम्। सर्वासां उपनिषदां सारतत्त्वानि इह उपलभन्ते इत्यतः अस्याः नाम मुण्डकः इत्युच्यते बुधजनैः। एतस्याः नाम्नः विषये कानिचित् मतानि दरीदृश्यन्ते , शरीरे मुण्डः अर्थात् शिरः यथा उत्तमाङ्गम् इत्युक्ते सारस्वरूपं , तादृशमेव श्रुतिनां सारतत्त्वानि अत्र प्राप्यन्ते इत्यतः मस्तकसदृशा इयमुपनिषत् श्रेष्ठतमा इत्येके।इयमुपनिषत् अज्ञानस्य, अविद्यायाः वा मुण्डनं विधाय मुमुक्षून् मोचयति इत्यतः अस्याः नाम मुण्डकोपनिषदित्यपरे।अथर्ववेदस्य एकत्रिंशत्सु उपनिषत्सु इयं श्रेष्ठा इत्यतः अस्याः नाम मुण्डकः स्यादित्यन्ये। मुण्डकः नामक ऋषि अस्या उपनिषदः द्रष्टा बभूव अतः अस्याः नाम मुण्डक इतीतरे।

मुण्डकोपनिषद् अथर्ववेदस्य शौनकशाखान्तर्गता। अत्र मुण्डकत्रयम् अर्थात् अध्यायत्रयं शोभते। प्रतिमुण्डकं खण्डद्वये विभक्तम्। आहत्य अस्यामुपनिषदि 64 मन्त्राः सन्ति। अत्र ब्रह्मविद्यायाः परम्परा, परापराविद्या, ब्रह्मणः जगतः सृष्टिः, जीवपरमात्मनोः सम्बन्धः, पञ्चाग्निविद्या, सत्यस्य स्वरूपकथनम्, अचीर्णव्रतपालननियमाः प्रभृतयः विषयाः आम्नाताः। प्रायः सर्व एव सम्प्रदायविदः आचार्याः अस्याः उपनिषदः उपरि व्याख्यानं अकुर्वन्। शंकराचार्योऽपि न तत्र व्यतिक्रमः। आचार्यपादस्य आनन्दगिरेः व्याख्यापि अस्यामुपनिषदि समुल्लसति। नृत्यगोपालपञ्चतीर्थस्य श्रुत्यर्थबोधिनी - मुण्डकोपनिषदः प्रसिद्धासु टीकासु अर्वाचीना टीका भवति नृत्यगोपालपञ्चतीर्थमहाभागस्य श्रुत्यर्थबोधिनी। अन्यासु टीकासु इयं टीका समासालङ्कारादिबाहुल्यवर्जिता, व्याकरणगता त्रुटीमुक्ता , कठिनवाक्यप्रभावमुक्ता , सरला हृदयग्राहिनी च । टीकायाः प्रारम्भे आचार्यपादः श्रीनृत्यगोपालपञ्चतीर्थः मङ्गलमाचरति, - नत्वा श्रीगुरुगौराङ्ग तद्भक्तान् वैष्णवांस्तथा।प्रीणयितुं मया टीका श्रुत्यर्थबोधिनी कृता। श्री श्री वैषवनिर्द्देशात् गौरीयमतसाधनम्।साधवो यदि तुष्येरण् सफलोऽसौ ततः श्रमः। अत्र स्वसम्प्रदायप्रसिद्धानां पूर्वाचार्यानां नामानि श्रद्धापूर्वकं स्मरणं टीकां प्रारभ्यते आचार्यपादः नृत्यगोपालपञ्चतीर्थः। श्लोकस्य तृतीयपङ्क्तौ स्पष्टतः एव उल्लिखति आचार्यः , गौरीयमतसाधनाय तस्यैषा प्रवृत्तिः। गौडीयमतसाधनमर्थात् गौडीयाचिन्त्यभेदाभेददर्शनस्य मतप्रतिष्ठापनमिति भाव्यम्।

नृत्यगोपालपञ्चतीर्थमहाभागः माण्डूक्य- तैत्तिरीय- ऐतरेयोपनिषदामुपरि अपि टीकां रचयामास। बलदेवविद्याभूषणस्य अचिन्त्यभेदाभेदमतावलम्बिनः गोविन्दभाष्यस्योपरि एतस्य पण्डितवर्यस्य 'विवृति' नाम्नी काचित् बङ्गीया व्याख्या प्राप्यते।

श्रुत्यर्थबोधिनीमनुसृत्य पञ्चाग्निविद्यायाः विचारः - आदावेव अस्माभिः प्रोक्तं यत् मुण्डकोपनिषदि बहुविधाः विषयाः प्रोक्ताः। तेषु विषयेषु अन्यतमाः केचन विषयाः भवन्ति ब्रह्मविद्यासम्प्रदायवर्णनं , परापराविद्यायाः विषये विचारः , लूताकीटाग्निविस्फुलिङ्गादिदृष्टान्तेन जगतः सृष्टिः , सत्यस्य विजयः , नाडीविद्या, अमृतस्य सेतोः वर्णनं , पञ्चाग्निविद्या, जीवन्मुक्तिः, अचीर्णव्रतपरिपालननियमाः , प्रभृतयः। इत्यादिना मन्त्रेन द्वितीयमुण्डकस्य प्रथमखण्डस्य पञ्चमे मन्त्रे पञ्चाग्निविद्यामामनन्ति मुण्डकोपनिषद्। तत्र श्रुत्यर्थबोधिनीकारः एवं व्याख्याति, 'अथ पञ्चाग्निविद्योपासनार्थं ता उल्लिख्यन्ते - तत्र आहुत्याधारः, आहुतिकर्ता, आहुतिद्रव्यञ्च वक्तव्यम्, प्रथमाहुतौ आधारः आह्वनीयोऽग्निः, पयोद्रव्यमाज्यं, आहुतिकर्तृणि इन्द्रादयः विपरिणममानाः, अतश्च द्युलोकः, अग्निः, तस्मात् सोमोऽजयात। सोमात् पर्ज्जन्यः इति द्वितीयः। 'इत्थं प्रकारेण पञ्चमोऽग्निस्वरूपं योषित् पर्यन्तं क्रमपूर्वकं व्याख्यानं प्रस्तौति श्रुत्यर्थबोधिनीकारः नृत्यगोपालपञ्चतीर्थमहाभागः। तत्र बृहदारण्यकोपनिषदः मन्त्रमपि प्रमाणत्वेन प्रददाति 'पर्ज्जन्यो वा अग्निर्गौतम एतस्मिन्नग्नौ देवाः सोमं जुह्याति' इत्यादि।

## अमृतवाणी गीतातत्वार्थबोधः।।

**शत्रुघ्नश्रीनिवासाचार्यः पण्डित शम्भुनाथ शास्त्री वेदान्ती भागलपुर, ( बिहार )**

अमृतवाणी श्रीमते रामानुजाय नमः
गीतातत्वार्थबोधः
स्थितप्रज्ञस्य का भाषा अर्जुन उवाच
स्थितप्रज्ञस्य का भाषा
समाधिस्थस्य केशव।
स्थितधीः किं प्रभाषेत
किमासीत व्रजेत् किम।।

**संस्कृतभाष्यम्-** अर्जुनःपृच्छति कृष्णं किं स्थितप्रज्ञलक्षणम्। कथं वदति बुद्धस्तु गमनञ्च कथं भवेत। श्रीमद्भगवद्गीतायाः द्वितीयाध्यास्य 54 तमे श्लोकेऽर्जुनः श्रद्धया जिज्ञासुः भूत्वा भगवन्तं श्रीकृष्णं पृच्छति यत् हे केशव!यदाऽहं योगपूर्वकं स्थितप्रज्ञतां प्राप्स्यामि तदा मम स्थितप्रज्ञस्य किं लक्षणं भविष्यति अत्र विचारणीयःप्रश्नो यत् स्थितप्रज्ञतायाः विषये मनसि प्रश्नः कथमजायत।पुर्वस्मिन्नेव श्लोके श्रीकृष्णः अर्जुनमुपदिष्टवानासीत
यत् 'समाधावचला बुद्धिस्तदा
योगवपास्यसि। गीता/2/53

**अर्थात्-** यदा तव बुद्धिः आसक्तिरहितकर्मानुष्ठानिकतया निर्मलचित्ते निश्चलभावेन सुस्थिरा भविष्यति तदा त्वं निश्चयेन ज्ञाननिष्ठाम् आत्मदर्शन रूपयोगं प्राप्स्यसि। एतस्मात् कारणादेव स्थितप्रज्ञताविषकः प्रश्नः अर्जुनेनोत्थापितःयद् तस्य स्थितप्रज्ञस्य किदृशःस्वभावः,किं तस्य लक्षणं ,का भाषा च भविष्यन्ति,अपि च परत्मनि समाधियुक्तस्य साधकस्य किं लक्षण।यस्य बुद्धिः योगे स्थितः, तस्य योगिनः लक्षणं किं भवति कथमसौ चलति सम्यग् विविच्यतामित्यर्थः।

**अन्वयशब्दार्थः-** अर्जुन अर्जुन ने,उवाचकहा, केशवहे श्रीकृष्ण!,समाधिस्थस्य,सुख और दुःख में दोनों में समभाव एवं निर्मलचित्त वाले,स्थितप्रज्ञस्य स्थिर बुद्धिवाले पुरुष के,भाषा स्वरूप (लक्षण),काक्या है?, स्थितधीःस्थिर बुद्धिवाला, किम् किस प्रकार, प्रभाषेत बोलता है, किमासीत किस प्रकार उठता -बैठता है,किम किस प्रकार।

**तत्वार्थः** -अर्जुन ने भगवान् श्रीकृष्ण से कहा कि हे केशव! समाधि में स्थित (परमात्मा में स्थित) स्थितप्रज्ञ पुरुष का क्या लक्षण है वह स्थिरबुद्धि वाला पुरुष कैसे बोलता है कैसे बैठता है तथा कैसे चलता है

**रहस्यात्मक-तथ्य-** भगवान् श्रीकृष्ण ने इसके पूर्व के उपदेशों में अर्जुन को कहा है कि जो समता से युक्त होकर परमात्मा में स्थित हो जाता है वही वास्तविक में बुद्धिमान् है तथा वह इस मोह रूपी दल दल को निश्चय ही पार कर जाता है। इसलिए हे अर्जुन ! तुम इस दशा में समत्वभाव में स्थित हो जाओ। अपनी इस निश्चल बुद्धि के द्वारा अवश्य ही योगपुरुष अर्थात् परमात्मा को प्राप्त हो जाओगे।'समाधावचला बुद्धिस्तदा योगमवास्यसि 2/53 अर्जुन के मन में यह जिज्ञासा उत्पन्न होना स्वाभाविक था कि भगवान् श्रीकृष्ण जिस स्थितप्रज्ञता की बात करते है उसकी क्या परिभाषा है? उसका लक्षण क्या है उसका स्वरूप क्या है?उसका बोलना ,चलना बैठना आदि कैसा होता है। अर्जुन इसी का चिन्तन करता है कि क्या हमारी बुद्धि स्थिर है या हमें इसके लिए कोई और उपाय करना शेष है। समाधिस्थ साधक के लक्षण कया है?क्या मैं भी उस अवस्था को प्राप्त कर सकता हूँ। अर्जुन शोचता है कि भगवान् के उपदेश से मैं भी इस मोह रूपी संसार को पार कर उस योग पुरुष परमात्मा को प्राप्त कर सकता हूँ।

## ॥ अमृतं संस्कृतम्॥

**गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः**

**॥ भक्तिग्राह्या सदा गीता॥**

श्रीनारायणकृपयैव गीता सर्वथा सर्वदा कृष्णार्जुनसंवादरूपा नित्यामृतोत्तमा निरपेक्षभावेन समात्मकल्याणकारिणी स्व स्व निष्ठानुसारिणी मर्हता माश्रित्य सवोत्तमा वेदोपनिषद्सारातिसार सर्वगुह्यतमा प्रभुप्रभारूपा सर्वात्मभवतम नाशिनी शीर्षताम धिराजते।। अस्मादेव कारणाद् गीता सर्वपूज्य कृतात्म साक्षात्कार वतां मनीषाविषया हृदयाभूता पुण्यवतां मनसि रमते। गीता माश्रित्य कृतात्म साक्षात्कार वतां नित्य कृष्ण चरणारविन्द चञ्जरी कानां पुण्य श्लोकानां व्याख्या समुद्भूता। । सर्वव्याख्या समादरणीया। यत्र बुद्धिः रमते तत्रैव विशेषार्थ प्रकाशः अर्थोत्कृष्ट्यं व्यदधाति। इत्यप्यवधेयं बुद्धिः स्वभावानुसारिणी प्रसरति। तेन सर्वान् ज्ञानविन्दूनाश्रित्य न समेषां समाना दृष्टिः। नो चेत् कथं विभिन्नाः व्याख्याः परिशोभन्ते अतः ज्ञानपरिपुष्ट्यै सर्वा व्याख्या द्रष्टव्या। याः प्रामाणिकाः कृतात्मसाक्षात्कारवतां ता एवावश्यमेव हि। तत्र मोदकरं चिन्तनं सामोदं मनः मोदयति। अद्वैत वाद परम्परायां प्रथितः विश्रुतः मनीषीमणिः कृतात्मसाक्षात्कारः कृष्णद्रष्टा मधुसूदनहृद्यः मधुसूदन सरस्वती गूढार्थदीपिका गीतायाः गूढार्थदीपिकानामिकां व्याख्यां व्यदधात। तत्र बहुविधः सुविचारः परिदृष्टः। अतीवसूक्ष्मा दार्शनिका व्याख्या। महाभारते समेषां मध्ये कथमर्जुनः एव गीताज्ञानसंवरणाऽर्हतामावहति। कथमर्जुन एकैव गीताज्ञानदुग्धामृतस्य वत्सःसाक्षाद् धर्मावतारः युधिष्ठिरः भूत्वापि न गीताज्ञानप्रापाकार्हतां भजते। अत्र महत् कारणं विद्यते भगवान् न सामान्यधर्मेण प्राप्यते। ।भक्त्या तुष्यति केवलं न च गुणैर्भक्तिप्रियो माधवः। अर्जुनः भक्तिस्वरूपः अतः अर्जुन एव गीताज्ञानाधिकारी ।।

# स्वतन्त्रतामृत महोत्सवमालक्ष्य संगीष्ठीं प्रतियोगिताञ्च समायोजिते

क्षेत्रीय लोक संपर्क ब्यूरो इति विभागेन् 26 तारिकायां प्रयागराजस्य हथिगांवचतुष्पथ कौडियार प्रखण्डस्य समीपे स्वतन्त्रतामृत महोत्सवमालक्ष्य संगीष्ठीं प्रतियोगिताञ्च समायोजिते। अस्मिन् शुभावसरे माध्यमिकविद्यालयस्य प्रधानाचार्या कमलकुमारी, ए आर पी अजमलः तथा चान्याः अपेक्षिताः तत्रोपस्थिताः। कार्यक्रमावसरे कोरोनाख्यरोगस्य प्रतिरोधकानि साधनानि वितरितानि प्रधानाचार्यया।स्वतन्त्रतायाः 75 तमे वर्षे देशभक्तानाम् प्राणविसर्जितानां पुण्यकर्मवतां कृते श्रद्धाञ्जयः सश्रद्धं समैः समर्पिताः। कार्यक्रमोऽयं सर्वविधेन श्लाघनीयः।

छायाकारः सौरभ कुमार

# ॥ स देवदेवोऽखिलभूतनाथः ॥

**डा. शिवानी शर्मा, ढाटरथग्रामः, जीन्दनगरम्, हरियाणाराज्यम् ।**

स वासुदेवः परमः पवित्रो
नरश्च नारायणनाथनाथः ।
स एव धर्मः पुरुषः पुराणः
हरिस्तथा वै पुरुषोत्तमश्च ।। 1।।
भवत्प्रभुः भूतभविष्यवेत्ता
भवो भवेशो ननु भावपूर्णः ।
भवार्णवस्यैव स तारको हि
स भक्तिमान्यो भयनाशकश्च ।।2।।
अनन्तरूपो भगवान्मुरारिः
अरौद्रगुह्यौ गहनश्च गुप्तः ।
अनन्यचेतास्तु वृषप्रियो ह्यो
अरीन्द्रपाणिश्च महावराहः ।।3।।
कपीन्द्रवर्यः कपिलश्च कालः
कृतागमो वै कुवलेशयश्च ।
कलाकलापः कुमुदश्च कूर्मः
स कल्पवृक्षः कुहकश्च कृष्णः।।4।।
महाधनो यो धनवान्धरेन्द्रः
महाविभूतिर्मथुरापतिश्च ।
महाशनो यश्च मनोजवस्सः
मधुर्महाऽहः मधुनाशकारी ।।5।।
ऋतुर्विशिष्टश्च वसन्तरूपो
वरो वरेण्यश्च वरप्रदो यः ।
व्रजप्रियो यो वृषभाक्षरूपो
वृन्दापतिर्गोपतिगोकुलेशः ।।6।।
प्रजापतिः प्राणपुरातनो वै
प्रजागरः पद्मनिभेक्षणो हि ।
पुरन्दरः पीतकपर्दकः स
प्रजेशरूपः परमेश्वरो यः ।। 7।।
कृपाकरो भीतिहरो महेशः
स कालमूर्तिः करुणाकरो हि ।
क्षमाकरो वै कमनीयकान्तः
कथाप्रियः कष्टहरः कृपालुः ।।8।।
शुभात्मको वै च शिवात्मको हि
सदा स सत्यव्रतधारकश्च ।
शिवः शिवेशश्च शिवेश्वरश्च
शताननो यश्च सहिष्णुदेवः ।।9।।
सनातनो यो ननु सर्वभूतः
समः समर्थः समभावकारी ।
स सर्वजीवः शुभचिन्तको हि
श्रियाःशिवान्याःसुखदःसुरेशः।।10।।

**( उपेन्द्रवज्रा छन्दः )**

# भारते चत्वारः ग्रामाः संस्कृत ग्रामरूपेण परिवर्तिताः यत्र आबाल वृद्धाः संस्कृतम् मातृभाषा रूपेण स्वीकृत्य तेनैव सम्भाषन्ते

**श्री. अभिजित रामचंद्र तोडकर**
**संस्कृत भारती, महाराष्ट्रम्।**

1981 तमे वर्षे बेङ्गलुरूमध्ये चतुर्भिः संस्कृतशिक्षकैः एकस्य संस्कृतान्दोलनस्य आरम्भः कृतः। तस्य आन्दोलनस्य आधारभूत-स्वयंसेविसङ्घटनस्य नाम अस्ति--संस्कृतभारती। संस्कृतं भारते आधुनिककाले व्याकरण-भाषान्तर-पद्धत्या (Grammar-translation Method) पाठ्यते स्म। तत्र भाषान्तरलेखने एव सर्वः भारः। तया पद्धत्या छात्राः भाषान्तरमेव शिक्षन्ते न तु संस्कृतम्। एतस्यां पद्धतौ व्याकरणस्य दुरूहनियमानाम् अनर्थकरटनेन छात्राः संस्कृताध्ययनं प्रति हतोत्साहाः भूत्वा संस्कृतं त्यजन्ति। तेन संस्कृतपठितृपाठयितृणां सङ्ख्या प्रतिदिनं न्यूना एव भवन्ती अस्ति। एतत्सर्वं पश्यन्तः एते शिक्षकाः संस्कृतोद्धाराय कः उपायः विधेयः इत्येतस्य चिन्तने मग्नाः अभवन्। वस्तुतः संस्कृतम् एकस्मिन् काले अस्माकं मातृभाषा तथा च ज्ञानभाषा अपि आसेतु हिमाचलं जनाः व्यवहारभाषारूपेण संस्कृतस्य एव उपयोगं कुर्वन्ति स्म। स्थापत्य-खगोल-रसायन-ज्यौतिष-योग-आयुर्वेद-राज्यशास्त्रादीनि नैकानि व्यवहारोपयोगीनि शास्त्राणि संस्कृते एव विकसितान्यासन्। संस्कृते विद्यमानानि काव्यनाटकादीनि अस्माकं संस्कृतेः परिचायकानि सर्वस्मिञ्जगति तेषां साहित्यिकगुणैः प्रशंसितानि अपि। एतावदेव न अपितु सर्वस्य भारतस्य राष्ट्ररूपेण एकस्मिन् सूत्रे निबन्धनं केवलं संस्कृतेन एव शक्यते। यतः आङ्ग्लभाषा परकीया। हिन्दी अपि न सर्वमान्या। अतः उभेपि राष्ट्रनिर्माणाय तावत् सामर्थ्यं न वहतः यावत् सामर्थ्यं संस्कृतस्य। सम्पूर्णे राष्ट्रे संस्कृतं प्रति अनुरागः,संस्कृतं ज्ञातुं,पठितुं, व्यवहारे उपयोक्तुं च इच्छा वर्तते। तथापि यथा पूर्वोक्तं संस्कृतस्य पाठनपद्धतिः अननुकूला। तेन संस्कृताध्ययनाय प्रवृत्ताः विरला एव। तर्हि किं करणीयम् कः मार्गः कः उपायः

यया भाषते सा भाषा। भाषा यदि जनानां मुखे न भवति तर्हि भाषायाः भाषात्वमेव समाप्तम्। अतः भाषेति संज्ञाम् आवहत् वस्तु प्रप्रथमं जनानां मुखे व्यवहारार्थं वसेत्।

भाषाशिक्षणस्य नैसर्गिकक्रमः कः इति चिन्तनीयं चेत् अस्माकं मराठीकन्नडादिमातृभाषाणाम् शिक्षणक्रमः आबाल्यात् स्मरन्तु। प्रप्रथमं वयं मातृभाषाविषये कथं ज्ञातवन्तः? अस्माकं माता यान् शब्दान् वदति स्म तान् अनूच्चार्यैव वयं मातृभाषां शिक्षितवन्तः। न तत्र व्याकरणमासीत् अथवा भाषान्तरम्। अतः भाषाशिक्षणस्य नैसर्गिकक्रमे प्रथमसोपानः अस्ति श्रवणानुगामि उच्चारणम्। तदनन्तरं वयं साक्षात् सम्भाषणमेव कर्तुम् आरब्धवन्तः। यदा शालागमनस्य वयः प्राप्तं तावत् वयं सम्भाषणे एव प्रभूतम् अभ्यस्ताः जाताः। शालाप्रवेशात् अनन्तरं लिपिज्ञानादिकं लेखन-वाचनादिकं च प्रारब्धम संस्कृत शिक्षणेपि भाषाज्ञानस्य एषः नैसर्गिकः क्रमः अङ्गीकर्तव्यः। तदैव संस्कृतशिक्षणं सुलभं सुकरम् औचित्यपूर्णं रुचिजनकं तथा च सामथ्यर्युक्तं भवेदिति विचिन्त्य तैः चतुर्भिः शिक्षकैः संस्कृतं सम्भाषणमाध्यमेन पाठयितुं प्रयोगाः आरब्धाः। तेषाम् अविरतप्रयत्नानां फलितमासीत् संस्कृतभारत्याः दशदिनात्मकस्य सम्भाषणवर्गस्य पाठ्यक्रमः। एतस्मिन्वर्गे संस्कृतं साक्षात् सम्भाषणमाध्यमेनैव पाठ्यते। तेन प्रथमदिनादेव जनाः संस्कृतेनैव सम्भाषणं कर्तुम् आरभन्ते। गतशतकस्य एकाशीतितमे वर्षे प्रारब्धमेतत्कार्यं शनैः शनैः वर्धमानं बीजात् वटवृक्षः इव महद्रूपेण परिवर्तितम्। संस्कृतं जनभाषा भवेदिति संस्कृतभारत्याः चरमं ध्येयम्। तदर्थं गतचत्वारिंशद्वर्षाणि संस्कृतभारती अविरतं प्रयत्नरता अस्ति। एतेषा प्रयत्नानां फलितं गणयामश्चेत् तदेवम्-

1 इदानीं भारते मिझोराम,कश्मीरादिकेचन राज्यानि विहाय सर्वत्र संस्कृतभारत्याः कार्यकर्तारः सन्ति।सर्वस्मिन्देशे संस्कृतभारत्याः आहत्य 4500 केन्द्राणि सन्ति।
2 भारतात् बहिः 21 देशेषु सङ्घटनस्य कार्यविस्तरः जातः अस्ति।
3 अद्ययावत् 1 कोटिजनाः संस्कृतभारत्या संस्कृतसम्भाषणे प्रशिक्षिताः। तथा च 1 लक्षसंस्कृतशिक्षकाः अपि सम्भाषणमाध्यमेन संस्कृतं पाठयितुं प्रशिक्षिताः।
4 भारते चत्वारः ग्रामाः संस्कृतग्रामरूपेण परिवर्तिताः यत्र आबालवृद्धाः संस्कृतम् मातृभाषारूपेण स्वीकृत्य तेनैव सम्भाषन्ते।
5 आहत्य 6000 कुटुम्बानि संस्कृतकुटुम्बानि जातानि सन्ति यत्र सर्वे गृहसदस्याः संस्कृतेनैव सम्भाषन्ते।

**अधुना संस्कृत भारती द्वादशसु कार्यायामेषु संस्कृत प्रचारकार्यं करोति-**

1 सम्भाषणवर्गः 2 भाषाबोधनवर्गः 3 सम्भाषण शिबिरचालक -प्रशिक्षणवर्गः 4संवादशाला 5 गीताकेन्द्रम् 6 बालकेन्द्रम् 7 सरलपरीक्षा 8 पत्राचारद्वारा संस्कृतम् 9 पुस्तकप्रकाशनम् 10 संस्कृतप्रदर्शिनी 11 संस्कृतपुस्तकमेला 12 संस्कृत सम्मेलनानि। वयं तावत्सम्भाषणवर्गस्य विषये किञ्चित् ज्ञातवन्तः। तदनन्तरसोपानम् अस्ति भाषाबोधनवर्गः। एतस्मिन् त्रिदिनात्मके वर्गे सम्भाषणानुकूलं व्याकरणं पाठ्यते। तदनन्तरम् अस्ति शिबिरचालकप्रशिक्षणवर्गः। एषः दशदिनात्मकवर्गः प्रतिवर्षं मेमासे भवति। तत्र सम्भाषणभ्यस्तैः स्वयं सम्भाषणवर्गः कथं चालनीयः एतस्य प्रशिक्षणं दीयते। ये जनाः सम्भाषणवर्गादिषु सहभागं वोढुं न शक्नुवन्ति ते संवादशालां गत्वा सम्भाषणं शिक्षितुम् अर्हन्ति। स्थानद्वये--देहली तथा वाराणसी इत्यत्र-- आवर्षं नैरन्तर्येण संवादशालाः चाल्यन्ते। प्रत्येकं मासे द्विवारं संवादशाला भवति--1 तः 14 दिनाङ्कपर्यन्तं तथा च 16 तः 29 दिनाङ्कपर्यन्तम्। षोडषवर्षीयात् अधिकवयस्कः कोपि जनः संवादशालायां सहभागी भवितुं शक्नोति।

भगवद्गीताम् अध्येतुकामाः जनाः गीताक्रेन्द्रेषु गीताध्ययनं कुर्वन्ति। तदर्थं गीतासोपानम् इति नाम्ना स्वतन्त्रः अभ्यासक्रमः संस्कृतभारत्या निर्मितः अस्ति। लघुबालकाः खेलगीतादिमाध्यमेन बालकेन्द्रेषु मनोरञ्जकरूपेण संस्कृतं पठन्ति। यत्र शालासु संस्कृतस्य सामान्य-अध्ययनविषयत्वेन पाठनस्य व्यवस्था नास्ति तत्र शालाच्छात्राः संस्कृतसरलपरीक्षामाध्यमेन संस्कृतं पठितुं शक्नुवन्ति। ये जनाः कार्यव्यस्ततया सम्भाषणवर्गे संवादशालायां वा सहभागिनः भवितुं न शक्नुवन्ति तेषां कृते गृहे स्थित्वैव पत्राचारद्वारा संस्कृतशिक्षणस्य व्यवस्था कृता अस्ति।

प्राचीनशास्त्राणाम् आधुनिककाले उपयोगितां प्रदर्शयितुं निर्मिताः संस्कृतप्रदर्शिन्यः संस्कृतभारतीद्वारा तदा तदा विविधस्थलेषु आयोज्यन्ते। 'संस्कृते विज्ञानम्' 'कौटिलीयार्थशास्त्रम्' इत्यादयः तासां विषयाः। संस्कृतपुस्तकानां प्रसारार्थं संस्कृतपुस्तकमेलाः अपि संस्कृतभारती आयोजयति। संस्कृतं प्रति जनान् आकर्षितुं तदा तदा संस्कृतसम्मेलनानि आयोज्यन्ते। सम्मेलनानाम् एकं त्रैवार्षिकं चक्रम् अस्ति। प्रथमे वर्षे जनपदसम्मेलनानि भवन्ति। द्वितीयवर्षे प्रान्तकार्यकर्तृसम्मेलनानि भवन्ति। तृतीयवर्षे अखिलभारतीयकार्यकर्तृसम्मेलनं भवति। एतेषां सर्वेषाम् उपक्रमकार्यक्रमाणाम् आयोजयितारः सन्ति निरपेक्षबुद्ध्या समाजहितधिया कार्यं कुर्वाणाः संस्कृतभारतीकार्यकर्तारः। संस्कृतभारतीकार्यकर्ता कार्यं कुर्वन् स्वस्य कृते किमपि शुल्कं वेतनं वा नैव स्वीकरोति। संस्कृतस्य पाठनं सर्वदा निःशुल्कमेव। यत्र भोजन-निवासादि अन्यव्यवस्था आवश्यकी तत्र तस्याः कृते वयं नाममात्रं धनं स्वीकुर्मः। संस्कृतभारतीद्वारा कृताय एतस्मै संस्कृतचक्रप्रवर्तनाय साहाय्यं कृत्वा वयं संस्कृतं जनभाषारूपेण परिवर्तयित्वा भारतं विश्वगुरुत्वेन प्रतिष्ठापयेम इति निश्चयम् उद्घोष्य विरमामि साम्प्रतम्।

**। जयतु संस्कृतम् । जयतु भारतम् ।**

# ज्योतिषीयं प्रामाणिकं लोकोपकारकं कार्यं भवति

ज्योतिषीयं प्रामाणिकं लोकोपकारकं कार्यं भवति ज्योतिषस्य वेदाङ्गत्वात् तत्र न कश्चिद् सन्देह पञ्जवसरः। ज्योतिषार्थः प्रकाशः तस्य द्वैविध्यं सरति आभ्यंतरिकः आध्यात्मिकः प्रकाशः सर्वशीर्षतां भजते। एतवता आध्यात्मिकप्रकाशयुक्तानां फलादेशः प्रामाणिकतामधिरोहति। कृष्णकृपया मम 'हनुमज्ज्योतिषकेन्द्रं' वैदिकोपायेन लोककल्याणाय सततं प्रतिष्ठापूर्वक अग्रेसरति।तस्यैव प्रभावात् भारतीया स्त्री पूजाकिरणः तस्याः विवाहः इंगैंडवासिना' क्रिस्टोफर पाल्पेज' महोदयेन सह 2014 ईसवीयेऽभवत। सम्प्रति सा पाटलिपुत्रे स्वपितुः गृहे समागच्छत। तत एव ख्यातिं श्रुत्वा अत्रागतवती। ज्योतिष शास्त्र विहितोपायेन समस्यासमाधाने श्रुत्वा प्राप्य च सप्रसन्ना गतवती। तस्याः क्रोडे पुत्रः डेक्स्टर्ड मैथ्यू पैजः सम्पूर्णं वैदिकं वाङ्मयं नूनं कल्याणाय बहुप्रकारेण यतते। नास्त्यत्र सन्देहः।

डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः

# यत्र 'तुल्य' 'समान' 'सदृश' इत्यादिशब्दानां प्रयोगेण साधर्म्यस्य प्रतीतिर्लभ्यते तत्रोपमाया आर्थीभेदो निरूप्यते

वाङ्मयस्य प्रौढप्रयुक्तौ विषयगाम्भीर्यं सम्यग् बोधयितुं नैकविधाः कथनकला अवलम्ब्यन्ते। तासु भासिकसौष्ठवसर्जनमन्यतमं मन्यते। विकीर्णरूपेण प्रतिविम्बितं वैशिष्ट्यमेतन्निगमागमयोः कतिचनग्रन्थेषु प्राप्यते। विशेषतो रसभरितेषु काव्येषु प्रयोक्तव्यानि काव्यतत्त्वानि दर्शनादीनां चिन्तनप्रधानग्रन्थानां विषयगौरवस्य सारल्येन प्रबोधनाय इतस्ततः प्रयुज्यन्ते। एतेषु तत्त्वेष्वलङ्कारः प्राचीनकाव्यसिद्धान्तस्य रूपेण समादृतो वर्तते। श्रीमद्भगवद्गीतायामपि कतिचिदलङ्काराः समुल्लसन्तो दृश्यन्ते। गीता समन्ततो ब्रह्मविद्यायाःसारस्वरूपिणी भगवद्वाणी एवास्ति। एतन्नासत्यं यद् दिव्यवाणीयं बहुतो व्याख्यातुं शक्यत एव तदप्यत्र समायाता अलङ्कारा अस्याः काव्यात्मकमूल्यञ्च सुष्ठ प्रमाणयन्ति। तेष्वपि उपमालङ्कारचारुता काव्यप्रेमिणां चेतो रञ्जयितुमत्र परिस्फुरन्ती विलोक्यते। आलेखनेऽस्मिन् गीतायाः कतिचनश्लोकानुद्धृत्य तत्रोल्लसितस्योपमालङ्कारस्य सङ्गतिः संसाधिता वर्तते। कुत्रचिदुपमायाः भेदोपभेदाश्च सोदाहरणं निर्दिष्टाः सन्ति। दर्शनकाव्यतत्त्वयोः समन्वयश्च सङ्क्षेपेण निरूपितः। गीता काव्यतत्त्वदृष्ट्यापि विवेच्याऽस्तीति सिद्धान्तं स्थिरीकृत्य निदर्शनप्रमाणस्वरूपेण सादृश्यमूलकालङ्कारसार– सिद्धस्योपमालङ्कारस्य विच्छित्तिरात्र प्रदर्शिता वर्तते। उपमा, विच्छित्तिः, भावकः, प्रयुक्तिः, ब्रह्मज्ञानम्, उपमेयः, उपमानम्, साधारणधर्मः, वाचकशब्दः, श्रौती, आर्थी, प्रतीतिः, समुल्लसनम्, सोढा, क्षेत्री, प्रस्थानत्रयी, पराविद्या। श्रीमद्भगवद्गीता ज्ञानगङ्गेव प्रवहति। विश्वसाहित्यसंकृतिदर्शनादिविषया गीतामेवानुसरन्तो दृश्यन्ते। भगवतो मुखपद्माद् विनिःसृतेयं वाणी स्वकर्मपरिपूर्तये सर्वान् सदैव प्रेरयति। गीताया महत्त्ववर्णनं न कदापि पारमेति। सहस्रशो गन्थेषु विविधैराधरैर्गीतायाः सानुशीलनं विषयप्रतिपादनं विहितमस्ति। गीतेयं काव्यशास्त्रसरण्यापि व्याख्यातुं शक्यते। यतो हि काव्यशास्त्रदर्शनशास्त्रयोः सम्बन्धो नातिदूरं वर्तते। गीताया धार्मिकसाहित्यस्य रूपेणापि सर्वत्रास्ति समादरः। अत्र विविधालङ्काराणां सौन्दर्यसौष्ठवं विलसदस्ति। तेषूपमालङ्कारस्य विच्छित्तिर्विशेषेण सञ्चकास्ति। उपमालङ्कारस्य माध्यमाद् विहितेन विषयप्रतिपादनेन दार्शनिकार्थोऽपि भावकाभिरुचिं प्रतनुते। अत्र गीतायामुल्लसितस्योपमालङ्कारस्य सोदाहरणं दिङ्निर्देशो विधीयते। उपमा सादृश्यमूलकोऽर्थालङ्कारोऽस्ति। अलङ्कारसौन्दर्यस्य मूलाधारः सादृश्यं मन्यते। काव्यशास्त्रेषु सादृश्यमूल कालङ्कारा एव प्राधान्यं बिभ्रति। स्वतः सादृश्यत्वादुपमा सकलानां सादृश्यमूल्यकालङ्काराणां प्राणमयो मन्यते। अनेनैव कारणेन बहुभिः काव्यशास्त्रिभिरुपमा निखिलेष्वलङ्कारेषु प्रथमस्थाने निधापिता वर्तते। राजशेखर उपमामलङ्काराणां शिरोरत्नरूपं मनुते। रुय्यकः सकलानामलङ्काराणां बीजरूपं पश्यति। अप्पयदीक्षितेन चोपमायाः श्रेष्ठता संसाधिता वर्तते। वेदव्याकरणादिग्रन्थेषु चिराय प्रयुज्यमाना उपमा काव्यशास्त्रेऽन्यतमस्यार्थलङ्कारस्य रूपेण प्रसिद्धिमलभत। उपमायाः कीदृशं महत्त्वमस्तीति निर्णेतुं चित्रमीमांसाया ब्रह्मज्ञानादिवोपमाज्ञानात् इति वचनं प्रमाणसाधनं भवति। सकलालङ्कारप्रधानभूतस्योपमालङ्कारस्य गीतायामपि प्रयुक्तिरौचित्यपूर्णा सिद्ध्यति। नाट्यशास्त्र काराद् भरतादारभ्य जगन्नाथपर्यन्तमुपमाया भेदोपभेदाः प्रदर्शिताः सन्ति। न्यूनतोऽपि पञ्चभेदान् प्रदर्श्याधिकतमं पञ्चविंशत्यधिकशतं भेदा निर्दिष्टाः सन्ति। भरतेन पञ्च, दण्डिना पञ्चत्रिंशत्, उद्भटेन सप्तदश, रुद्रटेन त्रयः, मम्मटेन पञ्चविंशतिः, विश्वनाथेन सप्तविंशतिः, जगन्नाथेन पञ्चविशंत्यधिकशतं च भेदाः वर्णिताः सन्ति। जगन्नाथेनातिरिक्तं पञ्चत्रिंशद् भेदाश्च उल्लिखिता दृश्यन्ते। अनेनोपमाया यथार्थतः कति भेदा मन्तव्या इत्यत्र सन्देहो जिज्ञासा च समुद्भवतः। अत्र उद्भटस्य उपमाभेदप्रदर्शनं महत्त्वं बिभर्ति। अनेन पूर्णोपमालुप्तोपमयोर्नाम्ना भेदद्वयं सन्दर्शितम्। मम्मटोऽपि इदमेव मतं स्वीकृत्य पूर्णोपमायाः श्रौत्यार्थिनाम्ना पुनरुपभेदद्वयं दर्शयति। एतावता सरलनिष्कर्षोऽमेव यदुपमायाः प्रमुखौ द्वौ भेदौ– पूर्णोपमा लुप्तोपमा च। पूर्णोपमाया भूयोऽपि उपभेद्वयं गण्यते– श्रौती आर्थी च। तेषां दिङ्निर्देशोऽत्र क्रियते।

उपमेयोपमानसाधारणधर्मवाचकशब्दा यत्र स्पष्टं निर्दिश्यन्ते तत्र पूर्णोपमा भवति। चतुर्णामवयवानां स्पष्टत उल्लेखनात् पूर्णत्वाच्च पूर्णोपमेयमभिधीयते। पूर्णोपमाया द्वौ भेदौ यथा– श्रौती आर्थी च। यत्र उपमानोपमेयभावः 'यथा' 'इव' इत्यादिशब्दानां श्रवणादेवागम्यते तत्रोपमायाः श्रौतीभेदो भवति। यत्र 'तुल्य' 'समान' 'सदृश' इत्यादिशब्दानां प्रयोगेण साधर्म्यस्य प्रतीतिर्लभ्यते तत्रोपमाया आर्थीभेदो निरूप्यते। उपमाया अङ्गानां मध्ये एकस्य द्वयोस्त्रयाणां वा यत्र लोपो भवति तत्र लुप्तोपमा विभाति। मम्मटो विश्वनाथश्च लुप्तोपमाया अपि भेदान् निर्दिशतः। उपमेयलुप्तोपमानलुप्तवाचकलुप्तधर्मलुप्तादिभेदेनास्याः पञ्चदश प्रकाराः परिगणिताः सन्ति। प्रकृतप्रसङ्गे पूर्णोपमाम्, तस्या उपभेदद्वयम्, लुप्तोपमाञ्च समाश्रित्य श्रीमद्भगवद् गीताया आलङ्कारिकविच्छित्तिर्निरूप्यते। गीतायां स्थाने स्थाने पूर्णोपमाया विच्छित्तिर्विलसन्ती अस्ति। प्रथमं श्रौतीसौन्दर्यं प्रकाश्यते।वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही। जीर्णानां शरीराणामुपमेयस्वरूपेण, जीर्णानां वाससामुपमानत्वेन, अपराणां नवीनानां स्वरूपग्रहणं साधारण (समान) धर्मस्य रूपेण, यथा– तथावाचकशब्दयोः प्रयुक्त्या चात्र पूर्णोपमायाः श्रौत्युपभेदः समुल्लसति।आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वद्।तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी।अत्र सम्पूर्णभोग पदार्थै विकारहीनः संयमी पुरुष उपमेयः, निखिलानां नदीनां जलेन परपूर्णाः सन्नपि अचलो विकाररहितो वा समुद्र उपमानम्, संयमिनः पुरुषस्य समुद्रस्य च अचलता (अविकारता) साधारणधर्मः, यद्वत्– तद्वत्वाचकशब्दौ विभान्तीति हेतोर्भेदोऽयं स्फुटीभवति। धूमेनाव्रियते वह्निर्यथादर्शो मलेन च।यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम्। अत्र बहुकामावृतमज्ञानं विवेको वा उपमेयो वर्तते। धूमेनावृतो वह्निः, मलेनावृत आदर्शः, उल्बेनावृतो गर्भश्चैक्यरूपेण उपमानमस्ति। उपमेयभूतस्याज्ञान स्यावर णमुपमान स्वरूपेषु वह्नौ धूमस्य, आदर्शे मलस्य, गर्भे चोल्बस्यावरणं च साधारणधर्मो वर्तते। तथावाचकशब्दौ प्रयुक्तौ स्तः। उपमायाः सर्वेषामवयवानां समुल्लसनादत्रापि श्रौतीभेदसौष्ठवमनुभूयते। यथैधांसि समिद्धोऽग्निर्भस्म सात्कुरुतेऽर्जुन। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा। श्लोकेऽस्मिन् रूपकरूपी ज्ञानाग्निरुपमेयोऽस्ति। समिद्धोऽग्निरुपमानम्। ज्ञानाग्नेः सर्वेषां कर्मणां समिद्धोऽग्नेरेधसां च भस्मासात्करणं साधारणधर्मः प्रकाशितो वर्तते। यथा– तथा वाचक शब्दौ समागतौ स्तः। अतोऽत्रापि श्रौत्युपमा स्फुटीभवति।चञ्चलं हि मनः कृषण प्रमाथि बलवद् दृढम्। तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्। चञ्चलं प्रमथनशीलं बलवद् दृढं च मनोऽत्रोपमेयः, तद्गुणवाहक वायुरुपमानम्। चाञ्चल्य-प्रमथनशीलादिवैशिष्ट्यं निग्रहणे दुष्करत्वं च मनसो वायोश्च साधारणधर्मः। 'इव' वाचकशब्दाधानात् स्पष्टम्। कश्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति। अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि। सांसारिका श्रयेण रहितो ब्रह्मप्राप्तेर्मार्गाद् विचलितश्च पुरुषोऽत्रोपमेयः प्रदर्शितः। छिन्नाभ्रमु पमानं परिकल्पितम्। 'इव' वाचकशब्दः। सांसारिकाश्रयरहितस्य ब्रह्मप्राप्तेर्मार्गाद् विचलितस्य पुरुषरूपोपमेयस्य छिन्नाभ्ररूपोमानस्य च साधर्म्यं नात्र परिस्फुरति। अत्र नाशः साधारणःधर्मः। यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाऽभिमुखा द्रवन्ति। तथा तवाऽमी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति। नरलोकवीरा उपमेयरूपेणाऽत्र प्रस्तुताः। बहवोऽम्बुवेगा उपमानम्। नरलोकवीराणां तव (श्रीकृष्णस्य) मुखे प्रवेशनं नदीनां बहूनामम्बुवेगानां समुद्रं प्रत्यभिमुखीभवनं च साधारणधर्मः। यथा–तथावाचकशब्दविन्यसनादत्रापि श्रौत्युपमा प्रतिभाति।यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः।तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः।विनाशनोन्मुखा लोका उपमेयरूपेणाऽत्र प्रस्तुताः। तादृशा एव पतङ्गा उपमानम्। लोकानां समृद्धवेगेन श्रीकृष्णस्य वक्त्रेषु प्रवेशनं पतङ्गानां तथैव रीत्या प्रदीप्तेऽग्नौ प्रवेशनं च साधारणधर्मः। लोकानां पतङ्गानां चासन्नविनाशनत्वञ्च साधारणधर्म एव। यथा– तथावाचकशब्दयोः प्रयोगः। उपमायाश्चतुर्णामेवावयवानां स्फुटत्वादत्र श्रौतीभेदसौष्ठवमवगम्यते।तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम्।पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायाऽर्हसि देव सोढुम्।अर्जुनेन विहितस्यापमानस्य (यथार्जुनो वक्ति) सोढ़ा श्रीकृष्ण उपमेयः। पुत्रस्यापमानस्य सोढा पिता, सख्युरपमानस्य सोढा सखा, प्रियापमानस्य सोढा प्रियः पतिर्वाऽप्युपमानम्। श्रीकृष्णस्यार्जुनेन विहितस्यापमानस्य सोढव्या शक्तिः पितुः पुत्रेण, संख्युः सखिना, प्रियस्य प्रियया च विहित स्यापमानस्य सोढव्या शक्तिश्च साधारणधर्मः। 'इव' वाचकशब्दः। उपमायाः सकलानामङ्गानामुपस्थापनाद् 'इव' शब्दस्य प्रयोगाच्चात्र पूर्णोपमायाः श्रौतीभेद उल्लसति। यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते।सर्वत्रावस्थित आत्मा उपमेयः। सर्वत्र व्याप्तमाकाशमुपमानम्। आत्माकाशयोर्लिप्तताराहित्यं साधारणधर्मः। यथा-तथा वाचकशब्दौ। एतेषां स्पष्ट मुल्लेखनादत्र श्रौतीभेदस्य सौन्दर्यं प्रकाशते। यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत। अशेषक्षेत्रस्य प्रकाशकः क्षेत्री (आत्मा) उपमेयः। सकललोकस्य प्रकाशक एको रविरुपमानम्। क्षेत्रस्य लोकस्य च प्रकाशत्वं साधारणधर्मः। यथा-तथा वाचकशब्दौ। उपमायाः सर्वैरवयवैरात्मनो रवेश्च साधर्म्यप्रदर्शनपूर्वकं तुल्यतापादनाद् भेदोऽयं संस्फुटति। उपमा द्वयोः पदार्थयोः सर्वात्मना साम्यमेव न किञ्चित् साम्यस्य कारणादप्यलङ्कारत्वं जनयाति। द्वयोः पदार्थयोः साधर्म्यं सदपि वैधर्म्यतत्त्वस्य चावस्थितिरुपमाया वैशिष्ट्यम्। आर्थ्युपमायामपि द्वयोः पदार्थयोः साधर्म्यं वैधर्म्यं च सम्भवतः। गीतायामार्थ्युपमायाः प्रयुक्तिः श्रौत्युपमातः स्वल्पैव दृश्यते। दिङ्निर्देशनायाधः श्लोकः प्रस्तूयते– न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।

## रम्या रामायणी कथा

मर्यादा पुरुषोत्तम श्री राम की जीवन गाथा

॥श्री राम कथा॥

अथ श्रीगुरुगविन्दकृपया सुन्दरकाण्डस्य कथा लिख्यते मया- प्रातःस्मरणीयाः पूज्यपादा भगवद्भक्तिभूषणाः कविकुलकमलदिवाकराः श्रद्धेया गोस्वामिनस्तुलसीदासमहाभागाः श्रीरामभद्रं प्रार्थयन्तो लिखन्ति-

शान्तं शाश्वतमप्रमेयमनघं निर्वाण शान्ति प्रदं
ब्रह्माशम्भुफणीन्द्रसेव्यमनिशं वेदान्तवेद्यं विभुम्।
रामाख्यं जगदीश्वरं सुरगुरुं मायामनुष्यं हरिं
वन्देऽहं करुणाकरं रघुवरं भूपालचूडामणिम्

अहं तं शान्तम्, सनातनम प्रमेयम्, निष्पापम्, मोक्षरूपम्, परमशान्तिदातरम्, ब्रह्मशम्भुशेषसेवितम्, वेदान्तविज्ञम्, सर्वव्यापकम्, सर्वेश्वरम्, मायामनुष्यम्, श्रीहरिम्, करुणावतारम्, रघुवंशश्रेष्ठं भूपालचूडामणिञ्च सादरं तच्चरणकमलयोः प्रणमामि।

नान्या स्पृहा रघुपते हृदयेऽस्मदीये
सत्यं वदामि च भवानखिलान्तरात्मा।
भक्तिं प्रयच्छ रघुपुंगव निर्भरां मे
कामादिदोषरहितं कुरु मानसं च

हे रघुनाथमहाभाग! अहं सत्यं वदामि। भवान् तु सर्वात्मा वर्तते। सर्वं जानाति। मम हृदये काचिदन्या अभिलाषा नास्ति। हे रघुकुलश्रेष्ठ! मह्यं स्व-निर्भरा भक्तिं प्रददातु कृपयतु। मन्मनः कामादिदोषाद् रहितं कुर्यादिति प्रार्थये। अतुलित बलधामं हेमशैलाभदेहं दनुजवन कृशानुं ज्ञानिनामग्रगण्यम्। सकल गुणनिधानं वानराणामधीशं रघुपति प्रियभक्तं वातजातं नमामि अहमातुलितबल धामम्, स्वर्णकान्तियुक्तम् सुमेरुपर्वततुल्यशरीरम्, खलानां वनं विध्वसं कर्तारम्, ज्ञानि नामग्रणीयम्, सर्वगुणनिधानम्, वानरणाम धीशम्, श्रीरघुनन्दनस्य प्रियभक्तम्, पवनपुत्रं श्रीहनुमन्तं सादरं प्रणमामि। समुद्रतटे ऋक्षराजो जाम्बवान् महाभागस्य सुवचनानि श्रुत्वा श्रीहनुमान् महाभागः प्रसन्नो भूत्वा सर्वान् निवेदितवान्, यत् भवन्तः सर्वे जनाः दुःखं सहित्वा कन्दमूलफलानि भक्षयित्वा मत्प्रत्या गमनं यावत् प्रतीक्षां कुर्युरिति प्रार्थये। जामवंत के बचन सुहाए।

सुनि हनुमंत हृदय अति भाए?
तब लगि मोहि परिखेहु तुम्ह भाई।
सहि दुख कंद मूल फल खाई?

हे मत्प्रियात्मनः! यावदहं भगवतीं सीतां दृष्ट्वा पुनः अत्रागच्छामि तावत् सर्वे मत्प्रतीक्षां कुर्युरिति निवेदये।

यह कहि नाइ सबन्हि कहुँ माथा।
चलेउ हरषि हियँ धरि रघुनाथा?

एतत्कथयित्वा श्रीहनुमन्महाभागः प्रसन्नतापूर्वकं श्रीरघुनाथछविं हृदये धारयित्वा तथा सर्वान् शिरसा प्रणम्य ततः प्रस्थानमकरोदिति शम्।

आचार्य अरविंद पांडेय

-क्रमशः

## 'पुष्पावचयं कुर्वतीं चेटीं दृष्ट्वा'

भरतेन नेपथ्यगृहस्य द्वारद्वयमुक्तम्। द्वारद्वयमेतद् पटेनावृत्तं भवति। इत एव नटानां रङ्गमञ्चे प्रवेशः भवति। बहुषु नाटकेषु पटाक्षेप, अपटीक्षेपेण इत्येतादृशाः सूचनाः भवन्ति। अत्र पात्राणां केवलं गमनागमनं नापेक्षितम्। पात्राणां भावदर्शनामपि एतेन पटेन प्रदर्श्यते। अस्मिन्सन्दर्भे भरतः वदति - 'अपटीक्षेपकृताश्चात्यधिकहर्षशोकरोषाद्याः'अत्र नटानां हर्षशोकरोषान् दर्शयितुम् अपटीक्षेपो भवति। नाटयशास्त्रानुसारं प्रवेशसूचनां विना पात्रस्य प्रवेशः रङ्गमञ्चे न भवति। परं यत्र कुत्रापि भावनातिरेकेण सहसा पात्रप्रवेशः दर्शयितव्यः तत्र प्रवेशसूचनां विना नेपथ्यगृहस्य पटाक्षेपं कृत्वा नटः रङ्गमञ्चे प्रविशति यथा चारुदत्तनाटके भयाक्रान्तः संवाहकः अपटीक्षेपेण प्रविशति।अभिज्ञानशाकुन्तले षष्ठाङ्के नाट्यसूचना वर्तते 'पुष्पावचयं कुर्वतीं चेटीं दृष्ट्वा' प्रविश्यापटीक्षेपेण कुपितं कञ्चुकी प्रविशति।' नेपथ्यगृहस्य द्वारद्वयं पटावृत्तं भवति इत्यस्य स्पष्टोल्लेखः मालविकाग्निमित्रेऽपि दृश्यते। द्वितीयेऽङ्के राजा सपरिवारं नृत्यस्पर्धां द्रष्टुं रङ्गपीठे उपविष्टः। यदा गणदासः मालविकायाः प्रवेशस्य सूचनां ददाति। तदा राजा नेपथ्यगृहं प्रति दृष्ट्वा वदति - 'अधीरतया मालविकां द्रष्टुं जवनिकां संहर्तुमिच्छामि। नेपथ्यपरिगतायाश्चक्षुर्दर्शनमुत्सुकं तस्याः।संहर्तुमधिरतया व्यवसितमिव मे तिरस्करिणीम।अत्र जवनिकाया उल्लेखः महत्त्वपूर्णः। एतेन नेपथ्यगृहं पश्चिमे दिग्विभागे भवतीति ज्ञायते। अग्निमित्रः पुनः वदति- 'द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरकरिणीम्। अत्र तिरस्करिणी शब्दः जवनिकायाः कृते प्रयुक्तः। जवनिका शब्दः 'यवनशब्दादागत इति वदन्ति' केचन विद्वांसः। अनेन ग्रीकनाट्यपरम्परा लक्ष्यते इत्यपि ते वदन्ति। परं ग्रीकनाट्यगृहेषु यवनिका न प्रयुज्यते संस्कृतनाट्यप्रकारेषु पात्राणां प्रवेशः सूचनां विना न भवतिति दृष्टमस्माभिः। कुत्रचित् प्रवेशिकी ध्रुवागानं भवती। तदनन्तरं पटाकर्षणं कृत्वा पात्रप्रवेशो भवति। यथा 'विक्रमोर्वशीयम्' नाटके चतुर्थाङ्के पुरूरवसः प्रवेशार्थं प्रावेशिकी ध्रुवा भवति।

## मानकार्येषु नारीणां नियुञ्जीतानुचारिकाः अन्तः पुराधिकारे हि राजचर्यानुवर्तिनाम्

राजप्रासादस्य समीपे वा राजप्रासादे वर्तते। अन्यच्च प्रेक्षागृहस्य काचिन्नेपथ्यपालिनी नाम अधिकारिणी स्त्री वर्तते। नाटके तस्याः नाम रेवेति । अस्यां सङ्गीतशालायां वेषादिकानि नाटकीया भरणानि सर्वदा सिद्धनि भवन्ति। सीतायाः भविष्यत्कालिकं वनगमनमत्र भासेन नाट्यपूर्णरीत्या सूचितम्। अस्मिन् प्रेक्षागृहे स्त्रीबाहुल्यं दृश्यते। यतो हीयं रङ्गशाला अन्तःपुरे वर्तते । भरतेनाप्युक्तम् - मानकार्येषु नारीणां नियुञ्जीतानुचारिकाः। अन्तः पुराधिकारे हि राजचर्यानुवर्तिनाम्। सर्वनृत्ताङ्गयोगज्ञं नाट्यागारे निवेशयेत्। याः स्त्रियः अन्तःपुरे नियुक्ताः नृत्ये नाट्ये च निपुणाः भवन्ति ताः अन्तःपुरस्थितनाट्यशालायाम् अधिकारिणीरूपेण नियोक्तव्याः। तादृश्येव एषा रेवा नाम अधिकारिणी। प्रेक्षागृहस्य कृते सङ्गीतशालेति प्रयोगः दृश्यते। सङ्गीतं विना नाट्यं न भवत्येव। तेनैव सङ्गीतशाला इति प्रयोगः कृतः स्यात्। कालिदासस्य नाटकेष्वपि सङ्गीतशाला दृश्यते। अस्या उल्लेखः कुत्रचित् सङ्गीतशालारूपेण कुत्रचित् प्रेक्षागृहरूपेणापि दृश्यते। अभिज्ञानशाकुन्तले पञ्चमाङ्कस्य प्रारम्भे सङ्गीतशालातः हंसपदिकायाः स्वरसाधना राजप्रासादे सिंहासने उपविष्टेन राज्ञा श्रुतेति विदूषकः वदति। हंसपदिकाया उपालम्भस्योत्तरमपि राज्ञा विदूषकेन सह प्रेषितम्। 'मालविकाऽग्निमित्रम्' इति हरदत्तगणदासयोः नाट्याचार्ययोः संघर्षे शिष्यस्पर्धया निर्णयं भवत्विति निश्चयः जातः यतो हि प्रयोगप्रधानं हि नाट्यम्। तदा विदूषकः वदति 'तेन द्वावपि वर्गौ प्रेक्षागृहे सङ्गीतरचनां कृत्वा तत्र भवतो दूतं प्रेषयताम्। अथवा मृदङ्गशब्द एव न उत्थापयिष्यति।'21 एतेन ज्ञायते यत् सङ्गीतशाला, नृत्यशाला वा प्रेक्षागृहं एकस्यैव नाट्यगृहस्य भिन्नानि नामानि । अस्मिन् स्थायिप्रेक्षागृहे सङ्गीतं, नाट्यं नृत्य च निरन्तररूपेण प्रचलति स्म। अत्र राजपरिवारजनाः प्रशिक्ष्यन्ते यथा मालविका इरावती च। अत्रापि सङ्गीतशालायाः स्थानं राजप्रासादस्य समीपे एव वर्तते। यवनिका, पटी अथवा अपटी नाट्यगृहस्य अग्रभागे कुत्रापि यवनिकायाः पटस्य वा निर्देशः न दृश्यते। अत एव सर्वे निष्क्रान्ताः इति अङ्कसमाप्तिदर्शकसूचना सर्वेषु नाटकेषु दृश्यते। यवनिकाया उल्लेखः भासस्य नाटकेषु दृश्यते। यथा प्रतिमा- नाटके दशरथस्य मृत्योरनन्तरमेका नाट्यसूचना वर्तते कञ्चुकीयो यवनिकास्तरणं करोति। भरतेन रङ्गमञ्च केचन निषिद्धविषयाः प्रोक्ताः तेषु युद्धं नगरोपरोधः मृत्युरित्येते प्रमुखविषयाः। 22 अत्र भासेन दशरथस्य मृत्युर्दर्शितः। कञ्चुकी तथा करोति इत्यनेन वाक्येन रङ्गमञ्चे कुत्रचित् यवनिकायाः स्थानमासीदिति ज्ञायते। तत्स्थानं कुत्र वर्तते इत्यस्मिन् विषये सङ्गीता गुन्देचा लिखति दशरथस्य मृत्युं गोपयितुमेव अस्याः यवनिकायाः प्रयोगः कृतः इति दृश्यते। उरुभङ्गेऽपि एतादृश्येव सूचना आगच्छति। तत्रापि मृत्युप्रसङ्ग एव दर्शितः। दुर्योधनस्य मृत्योरनन्तरं तस्य मृतदेहं रङ्गमण्डपादपसारयितुं यवनिकायाः प्रयोगः कृतः। तत्र नाट्यसूचना वर्तते- 'यवनिकास्तरणं करोति।'

## धार्मिकसाहित्येषु गीतायाः स्थानमुत्कृष्टं वर्तते

धार्मिकसाहित्येषु गीतायाः स्थानमुत्कृष्टं वर्तते। ज्ञान-भक्ति-कर्मयोगागाररूपा गीता संसारस्य विविधासु भाषासु अनूदिताऽस्ति। वैदिकवाङ्मयादेव व्याप्तानि काव्यतत्त्वानि गीतायामपि सन्निहितानि सन्ति। अत्र दार्शनिकविचारेषु काव्यस्य स्वरूपं प्रदत्तमस्ति येनास्याः प्रभावोऽखण्डो वर्तते, लोकप्रियता च विद्यतेतराम् (हीरा, 2014 :163)। प्रस्थानत्रय्यां परिगणिताया गीताया मूलोद्देश्यं वर्तते–अद्वैतवेदान्ते भक्तेः सामञ्जस्यं संस्थाप्य कर्मयोगस्य प्रतिपादनम् (शर्मा, 2056 : 90)। तदेवोद्देश्यमनुसृत्यापि काव्यतत्त्वस्याधानेन गीताया महत्त्वं प्रवर्धितं वर्तते। काव्यतत्त्वेष्वपि दृष्टान्त-रूपकोपलाङ्काराणां विच्छित्तिर्गीतायाः काव्यवैशिष्ट्यं प्रमाणयति। तत्राप्युपमालङ्कारस्य सौष्ठवं गीताया दर्शनकाव्यतत्त्वयोः समन्वयं प्रदर्शयति। सर्वोपनिषदां साररूपिणी भगवद्वाणी गीता सकलकाव्यतत्त्वदृष्ट्या विलोकयितव्या वर्तत एव। अस्या दर्शनकाव्यतत्त्वयोः समन्वयोऽनुपमो दृश्यते।

संस्कृतस्य साहित्येतरवाङ्मयेष्वपि काव्यतत्त्वानि प्रतिविम्बितानि दृश्यन्ते। शास्त्रेष्वपि काव्यतत्त्वानामास्वादनं संस्कृतवाङ्मयस्य मौलिकं वैशिष्ट्यं मन्यते। गीता प्राधान्येन दर्शनशास्त्रसर्वस्वं वर्तते। तदपि विविधानामलङ्काराणां विन्यसनादस्याः काव्यशास्त्रीयमहत्त्वमपि वरीवर्ति। अलङ्कारेष्वपि उपमाया विविधा भेदा गीतायां प्राप्यन्ते। पराविद्यायाः सूक्ष्मातिसूक्ष्मं रहस्यं सारल्येन बोधयितुमत्रोपमायाः कातिचन भेदाः प्रदर्शिताः सन्ति। तुलनयोदाहरणेन च विषयप्रबोधनाभ्यासनं प्राचीना पद्धतिर्वर्तते। इयमेव पद्धतिर्गीतयाप्यनुसृता दृश्यते। अत्रान्येषामपि काव्यतत्त्वानां सञ्चयः द्रष्टव्य एव। स्वयं भगवतः श्रीकृष्णस्य मुखारविन्दाद् विनिःसृता दिव्यवाणी गीता उपमालङ्कारविच्छित्त्यापि विभूषिताऽस्तीति निर्णेतुं शक्यते।


**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्श्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
-एसो. प्रो. **डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
डा. कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**




## बलदेवाय नमः

नारायणाग्रज सुराधिप चारुमूर्ते
क्षीरोदशुद्ध मधुमत्तसुरेशशर्मन् ।
आनन्दरूपमकरन्दसुमिष्टशिष्ट
श्रीकामपाल मम देहि करावलम्बम् ?1
केन्द्रापडापुरपते करुणावतार
हे रेवतीरमण हे दयणाविधार ।
हे गौरचन्द्रललितो विबुधेशसौर
त्रायस्व हे मम मनोमयदेवपौर 2
ललितनयनयुग्मे तीक्ष्णदृष्टिं प्रदाय
सुमधुरमधुहास्यं प्राश्य मुग्धं रसालम् ।
विपुलपुलकबाहुद्वन्द्वमद्वन्द्वपारं
हलधरपदगांगप्रेमधारां वहामि ?3
दीनार्तिनाशकपरात्परराजहंस
मत्प्राणकौलगुरुराजमहेशशर्मन् ।
कल्याणकल्पतरुपादपमूलमीश
श्रीकामपाल मम देहि करावलम्बम् ?4
गोपालबालकमहेश्वरगौरचन्द्रं
माधुर्यभक्तिनिलयं तुलसीसहायम् ।
स्वर्गापवर्गफलदं स्वजनानुरागं
नीलाम्बरं प्रियतमं प्रणमामि रामम् ?5

**नन्दप्रदीप्तकुमारः**

## 'अंशभागैर्भवद्भिर्दिस्तु रक्ष्योऽयं नाट्यमण्डपः'

भरतमुनिना नाट्यगृहस्य निर्माणं किमर्थमादिष्टम्? प्रश्नस्यास्योत्तरं नाट्यशास्त्रस्य प्रथमाध्याये प्राप्यते। तत्र भरतेन नाट्योत्पत्तिर्वर्णिता। क्रीडनीयकमिच्छाम इति इन्द्रादिदेवानां प्रार्थनामनुसृत्य ब्रह्मणा चतुर्भ्यो वेदेभ्यो चतुरांऽशान् गुहीत्वा पञ्चमो नाट्यवेदः निर्मितः। परं तस्याधारेण नाट्यनिर्मितिः कथं कर्तव्येति देवैरसमर्थता प्रकटिता। तदा भरतमुनिना नाट्यवेदस्याध्ययनं कृत्वा स्वशिष्यैः सह त्रिपुरदाहममृतमन्थनं च नाट्यप्रकारद्वयं देवानां पुरतो अभिनीतम्। नाट्यप्रकारद्वयेऽप्यसुराणां विनाशं दृष्ट्वा कृद्धैस्तैर्विघ्नानुत्पाद्य प्रयोगोऽयं स्थगयितः। तदा भरतमुनिः ब्रह्माणं प्रार्थितवान्। 'अस्य रक्षाविधिं सम्यगाज्ञापय सुरेश्वर।' भरतमुनेः प्रार्थनां निशम्य ब्रह्मणा विश्वकर्मा आदिष्टः। ततश्च विश्वकर्माणं ब्रह्मोवाच प्रयत्नतः। कुरु लक्षणसम्पन्नं नाट्यवेश्म महामते।ब्रह्मण आदेशं प्राप्य विश्वकर्माणा नाटयगृहं निर्मितम्। 'अंशभागैर्भवद्भिर्दिस्तु रक्ष्योऽयं नाट्यमण्डपः' इति ब्रह्मा सर्वान्सुरान्प्राह। नाट्यक्षणार्थं निर्विघ्ननाट्यप्रयोगार्थञ्च नाट्यगृहस्य निर्माणभवदिति कथया अनया ज्ञायते। अतः भरतमुनिना प्रथमाध्याये उक्तम्- 'अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रवर्तयेत्'।7 एतं सूत्रं गृहीत्वैव द्वितीयाध्याये नाट्यगृहस्य निर्माणविधिर्पूजाविधिश्च भरतमुनिना सविस्तरं वर्णितः। भरतमुनेः नाट्यशास्त्रमिति नाट्यशास्त्रस्य प्राचीनतमः प्रामाणिकश्च ग्रन्थः। नाट्यसम्बन्धिनः प्रायशः सर्वे विषयाः ग्रन्थेऽस्मिन् चर्चिताः। भरतमुनिना नाट्यगृहस्य सूक्ष्मातिसूक्ष्मं विस्तृततञ्च विवरणं नाट्यशास्त्रस्य द्वितीयाध्याये कृतम्। वर्णनेनानेन ज्ञातुं शक्यते यद् भरतमुनेः पूर्वं नाट्यकला प्रगतावस्थायामासीदिति। नाट्यपरम्परेयं वेदकालादारभ्य प्रवर्तिता ! यज्ञसमये संवादसूक्तानां साभिनयपठनमाख्यानानां च साभिनयकथनमेव नाट्यस्य पूर्वरूपम्। अत उत्सवप्रसङ्गे नाट्यप्रदर्शनस्य परम्परा प्रवर्तिता। रामायणे अश्वमेधयज्ञप्रसङ्गे लवकुशाभ्यां रामकथा श्राविततेति प्रसिद्धमेव1 महाभारते हरिवंशपुराणे प्रद्युम्नविवाहप्रसङ्गे वासुदेवकृपानुष्ठितेऽश्वमेधयज्ञप्रसङ्गे एकेन नटेन नाट्यप्रदर्शनं कृतमिति वर्णनं प्राप्यते।2 भरतमुनिना प्रथमनाट्यप्रयोगः इन्द्रध्वजोत्सवप्रसङ्गे कृतः।3 प्रयोगोऽयं कैलासपर्वते कृतं स्यात्। यतो हि शङ्करस्य ताण्डवं पार्वत्याः लास्यञ्च तत्रैव प्रवर्तते स्म। कैलासशब्दस्य व्युत्पत्तिरपि तदेव दर्शयति। केलीनां समूहः कैलं तेन आस्यते स्थीयते इति कैलासः विश्वकर्मणा तत्रैव प्रथमं नाट्यगृहं कृतं स्यात्। नाट्यगृहस्य नवप्रकाराः भरतेन वर्णिताः एतेषु प्रकारेषु मध्यमायताकृतिर्विकृष्टः नाट्यमण्डपस्तु योग्य इति उक्तम्- प्रेक्षागृहाणां सर्वेषां तस्मान्मध्य ममिष्यते। यावत्पाठ्यञ्च गेयञ्च तत्र श्रव्यतरं भवेत्। मानवानां कृते एतदेव योग्यं नाट्यगृहम्। एतादृशनाट्यगृहे संस्कृतनाटकानि भवन्ति स्म। परमेतादृशं नाट्यगृहं भारतवर्षे नाद्यावधिर्प्राप्तं कुत्रापीत्याश्चर्यकारकं खलु। अश्वघोषतः राजशेखर पर्यन्तं सहस्रवर्षेषु नाट्यलेखनमविरतं प्रचलितम्। प्रयोगप्रधानं हि नाट्यमिति कालिदासेन मालविकाग्निमित्रे उक्तमस्ति। मनोरञ्जनमेव नाट्यस्य प्रधानं प्रयोजनम्। अतः नाट्यप्रकाराणां प्रयोगाः भवन्ति स्म इत्यत्र नास्ति संशयलेशः। रामगढ़स्थायां सीताबेंगागुहायां दृश्यते नाट्यगृहस्य स्वरूपमिति केचन विद्वांसः वदन्ति। दक्षिणभारते केरलप्रदेशे भरतनिर्दिष्टनाट्यगृहसदृशं प्रेक्षागृहं लभ्यते। तत्र कुडिआट्टम शैल्यामनवरतं संस्कृतनाटकानां प्रयोगाः भवन्ति। परं तत्रापि भासस्य नाटकानां प्रयोगाः बाहुल्येन भवन्ति।